# मुनि जिनविजय–सम्पादित ग्रन्थावली

१ जैनतत्त्वसार–हिन्दी भाषांतर.

२ विज्ञप्तित्रिवेणि–संस्कृत हिंदी.

३ कृपारसकोष–संस्कृत हिंदी.

४ शत्रुंजयतीर्थोद्धार प्रबंध–संस्कृत हिंदी.

५ द्रौपदीस्वयंवर नाटक–संस्कृत हिंदी.

६ प्राचीन जैनलेखसंग्रह भाग १. संस्कृत गूजराती.

७ ,, ,, भाग २. ,, ,,

८ जैन ऐतिहासिक गूर्जरकाव्य संचय–गूजराती.

९ हरिभद्राचार्यस्य समयनिर्णयः–( संस्कृतनिबन्धः )

१० कुमारपालप्रतिबोधः–( गायकवाडस् ओरिएन्टल सीरीज. )

११ प्राकृतकथासंग्रहः–( गूजरात पुरातत्त्व मन्दिर ग्रंथावली. )

१२ पालीपाठावली. ,, ,, ,, ,,

१३ अभिधानप्पदीपिका–पालीशब्दकोष. ,, ,,

१४ जैनसाहित्यसंशोधक त्रैमासिक पत्र. खंड १–२.

## छपाता ग्रन्थो

१५ प्राचीन गूजराती गद्यसन्दर्भ.

१६ पट्टावलीसंग्रहः

१७ विजयदेवमाहात्म्य.

१८ गूजरातनां इतिहासनां साधनो.

जैनसाहित्यसंशोधक ग्रन्थमाला।

अर्हम्

# श्रीहरिभद्राचार्यस्य ममयनिर्णयः।

( प्रथम–प्राच्यविद्यापरिषदर्थे लिखित )

लेखकः –

मुनिराज–श्रीजिनविजयः।

# THE DATE OF HARIBHADRASURI

BY

MUNIRAJ SHRI JINAVIJAYA

(Read at the First Oriental Conference, November 1919.)

प्रकाशक –

जैनसाहित्यसंशोधक समाज

फर्ग्युसनकॉलेज रोड, पूना सिटी।

॥ अर्हम् ॥

। नमोऽर्हते श्रमणाय भगवते महावीराय ।

# श्रीहरिभद्राचार्यस्य समयनिर्णयः ।

श्रीजिनशासनप्रभावनाप्रभातार्विर्भावनभास्करः, सितपटपटलप्रधानप्रावचनिकपुरुषप्रवरः, प्रभूतप्रकरणप्रबन्धप्रणयनचतुरः, स्याद्वादमुद्रासंस्थापनैकधुरन्धरः, षड्दर्शनशास्त्रवार्ताभिज्ञधौरेयः, सुगृहीतनामधेयः श्रीहरिभद्र मुनिर्नामैको जैनधर्मीयः सुप्रसिद्ध आचार्यः पुराऽभवत् । तेन धार्मिकविषयविवेचकाः, दार्शनिकसिद्धान्तप्रतिपादकाश्च मननीया भूयांसो ग्रन्था अग्रन्थिषत । भिन्नभिन्नदर्शनानि, मतानि च मध्यस्थबुद्ध्या कोमलपद्धतिपुरस्सरमालोचयन्तः, विपक्षीयविचारकाणामपि गौरवपूर्वकं नामोल्लेखं कुर्वन्तो भारतीयेतिहासे उल्लेखनीया ये केचन विद्वांसः स्युः, तेष्वस्य विदुषो नाम प्रथमोल्लेखयोग्यं वर्तते ।

यद्यपि जैनीय इतिहासे हरिभद्रनामकानामनेकेषामाचार्याणामुल्लेखा लभ्यन्ते[1], परन्तु यमुद्दिश्य वयमुपरितनानि विशेषणानि निर्दिशामः, स सर्वेषां प्रथमः–अर्थादादिमो हरिभद्रः–ज्ञातव्यः । तस्यैव प्रथमहरिभद्राचार्यस्य सत्तासमयसम्बन्धि विचारणम् , निर्णयविधानं चास्माकं प्रस्तुतनिबन्धस्य विषयः॥

अस्माभिरादावेव सूचितम् , यत्–श्रीहरिभद्रो निखिलदर्शनशास्त्रतलस्पर्शी विद्वानासीत् । तस्मिन् विषये तेनानेके लघवः, महान्तश्च ग्रन्था रचिता वर्तन्ते । तेषु ग्रन्थेषु स्थले स्थले भारतवर्षीयाणामनेकेषामार्हत–वैदिक–बौद्ध–तत्त्वज्ञानामाचार्याणां धर्म-तत्त्व-विचारा आलोचिताः, प्रत्यालोचनाश्च दृश्यन्ते । अतः कारणात् श्रीहरिभद्रसूरेरस्तित्वसमयनिश्चये सञ्जाते तत्पूर्ववर्तिनामन्यकतिपयदार्शनिककोविदानां सत्तासमयविषयेऽपि कतिचिद् ज्ञातव्या वार्ता ज्ञातुं शक्याः ।

यूरोपीयपाण्डितेषु प्रायः सर्वतः प्रथममध्यापकपिटर्सन ( Professor P Peterson ) महाशयेन हरिभद्रस्य परिचयः प्राप्तः । तेन च स्वीये चतुर्थे कार्यविवरणे ( Fourth Report on Sk Mss. 1886 92, ) धार्मिकनीतिस्वरूपस्यानुपमतया प्रतिपादकं संस्कृतसाहित्यहृदयहारायमाणम् ' उपमितिभवप्रपञ्चा–कथा ' नामानं सहृदयहृदयङ्गमं कथाग्रन्थं रचयितुर्जैनसाधोः श्रीसिद्धर्षेः परिचयं कारयता हरिभद्रविषयेऽपि कियानुल्लेखः कृतः[2]। तत्पश्चात् , क्लात्त ( J Klatt ) ल्युमन (E Leumann) याकोबी ( H Jacobi ) बेल्लिनि ( A Ballini ) मिरोनो ( N. Mironow ) प्रभृतिभिरन्यैः प-

---

१ द्रष्टव्यम्—प० हरगोविन्ददासालिखित—' हरिभद्रसूरिचरित्रम् ' पृ० १ ।

२ पृ० ५ तथा परिशिष्ट ( Index of Authors ) पृ० CXXIX.

भिर्इतरापि यथासमयं प्रसंगवशात् निजनिजलेखेषु प्रस्तुतविषयस्योपरि न्यूनाधिका विचाराः कृता दरीदृश्यन्ते। किन्तु तेषु सर्वेषु डॉ. याकोबीमहाशयस्य परिश्रमो विशेषेणोल्लेखनीयः। तेनैव सर्वतः प्राक्, हरिभद्रसमयसूचकानां पुरातनोल्लेखानां सत्यत्वे सन्देहः प्रकटीकृतः[३]। भावनगरवास्तव्येन मोतीचन्द-गिरधरकापडियानामकजैनगृहस्थेन १९०५ खृष्टाब्दे केषुचित् प्रश्नेषु कृतेषु सत्सु याकोबीमहाशयेनास्मिन्विषये पुनरपि सविशेषमूहापोह कर्तुमारब्धः। तदूहापोहजन्यश्च निष्कर्षः, तेन स्वसम्पादिते ‘उपमितिभवप्रपञ्चा’ नामककथाग्रन्थस्य आंग्लभाषामय्यां प्रस्तावनायां लिपिबद्धः कृतः।

अत्रैवान्तरे महामहोपाध्यायश्रीसतीशचन्द्रविद्याभूषणमहाशयलिखितमांग्लभाषामयं ‘मध्यकालीनभारतीयन्यायशास्त्रेतिहास (History of the Mediaeval school of Indian Logic)’ नामकमुपयुक्तं पुस्तकं प्रसिद्धिमायातम्[६]। तत्र विद्याभूषणमहाशयेनान्यान्यजैननैयायिकानामिव हरिभद्रसूरेरपि समयविषये स्वीयो विचारः प्रदर्शितोऽस्ति। परन्तु स महाशयः स्वग्रन्थे यद्यद्वशतकमध्ये समुत्पन्नेन समाननामधेयेनान्येन हरिभद्रेण सार्द्धं प्रस्तुतहरिभद्रीयकतिपयकृतीनां सम्बन्धमायोज्य प्रकृतविषये विपर्यासकरणमन्तरा नान्यां कांचिद् ज्ञानव्यवस्थामस्मान् ज्ञापितवान्। किं बहुना, प्रस्तुतहरिभद्रकर्तृकानां प्रसिद्धानां प्रमाणप्रबन्धानां नामान्यपि तेन महाशयेन स्वकीयनिबन्धे नोल्लिखितानि। अत एतदेव प्रतीयते—प्रस्तुतहरिभद्रविहितविशालसाहित्यविषयः स्वल्पोऽपि परिचयो विद्याभूषणमहाशयेन प्राप्तुं नाशक्यत।

एवं—‘दिङ्नागीयन्यायप्रवेशस्योपरि हरिभद्रीया वृत्तिः (Dignaga's Nyayapravesa and Haribhadra's Commentary on it)’ एतन्नामके निबन्धे रूष्यदेशवास्तव्येन डॉ. मिरोनोमहाशयेनापि प्रस्तुतविषया काचिद् मीमांसा कृताऽस्ति।

यद्यपि पूर्वसूचितानुसारेण डॉ. याकोबीमहाशयेन एतस्मिन् विषये कतिपयानां प्रमाणानां साधकबाधकभावं सविशेषं परामृश्य कियन्तो नवीना विचाराः पुरस्कृताः। तथा, हरिभद्रीयसमयसूचके प्रचलिते प्रवादे बलवतीः शङ्काः समुपस्थाप्य यथास्वमति निर्णयोऽपि प्रकटीकृतः। किन्तु हरिभद्रविरचितान् समस्तान् ग्रन्थान् सूक्ष्मदृष्ट्याऽवलोक्य तेषु लभ्यमानान्यान्तरप्रमाणानि गवेषयितुं तेन स्वल्पमपि न चेष्टितम्। तत एव च स पुरातत्त्वज्ञः स्वमतसमर्थनाय निश्चयात्मकं किमपि प्रमाणमुपस्थापयितुं नालमभूत्।

इत्थं चायं प्रश्नोऽद्यापि अनिर्णीतावस्थायां तदवस्थ एव वर्तते। अतो हरिभद्रप्रणीतग्रन्थस-

---

३ Zeitschrift der Deutschen Morgenland. Gesellschaft, V. XL, P. 94

४ एतद्विषयकः पत्रव्यवहारः ‘जैनश्वेताम्बर कान्फरन्सहेरल्ड, जैन इतिहास साहित्य अंक, महावीर संवत् २४४१’ एतन्नामके मासिकपत्रे मुद्रितः।

५ Bibliotheca Indica नाम्न्या बङ्गीयएसियाटिकसोसायटीद्वाराप्रकाशितग्रन्थमालायाम्।

६ Jaina Logic, Chap. II p. 48

७ “जैनशासन दीवालीनो खास अंक वीर सं० २४३८” पृ० १३३।

मूहं यथावन्निरीक्ष्य, तत्र भाप्यमाणान्यान्तरप्रमाणान्याश्रित्य, अन्यान्यपि शक्यलाभानि बाह्यप्रमाणानि यथायथं विचार्य च प्रस्तुतप्रश्नं समाधातुं वयमद्य प्रवृत्ताः स्मः ।

हरिभद्राचार्येण अनेकशतसंख्याकाः ग्रन्था ग्रथिताः सन्ति, इति भावनिरूपका भूयांसो लेखा नैकप्राचीनार्वाचीनजैनग्रन्थेषु लभ्यन्ते । साम्प्रतमपि जैनवाङ्मये प्रायस्तत्कृतः शतसंख्यापरिमितो ग्रन्थराशिः समुपलभ्यते, श्रूयते वा । विद्यमाने विशालग्रन्थराशौ ये प्रसिद्धतराः, प्रौढाः, महत्त्वभूतश्च ग्रन्था अवश्यद्रष्टव्यास्तेषां नामान्यत्र निर्दिश्यन्ते ।

१ × आवश्यकसूत्रबृहद्वृत्तिः
२ × दशवैकालिकसूत्रबृहद्वृत्तिः
३ अनुयोगद्वारसूत्रलघुवृत्तिः
४ नन्दिसूत्रलघुवृत्तिः
५ प्रज्ञापनासूत्रप्रदेशव्याख्या
६ × ललितविस्तरानामचै० सू० वृत्तिः
७ × अष्टकप्रकरणम्
८ × षोडशकप्रकरणम्
९ × पञ्चाशकप्रकरणम्
१० सटीक पञ्चवस्तुप्रकरणम्
११ × पञ्चसूत्रप्रकरणटीका
१२ × श्रावकप्रज्ञप्तिः
१३ × धर्मबिन्दुः
१४ × योगबिन्दुः
१५ × योगदृष्टिसमुच्चयः
१६ × षड्दर्शनसमुच्चय
१७ × सटीक शास्त्रवार्तासमुच्चय.
१८ × सटीका अनेकान्तजयपताका
१९ × अनेकान्तवादप्रवेश
२० × लोकतत्त्वनिर्णयः
२१ दिग्नागकृतन्यायप्रवेशटीका
२२ × धर्मसंग्रहणीप्रकरणम्
२३ उपदेशपदप्रकरणम्
२४ × सम्बोधप्रकरणम्
२५ × सम्बोधसप्ततिप्रकरणम्
२६ × समराइच्चकहा

भारतीयैरपरैः पुरातनैः प्रसिद्धैर्विद्वद्भिरिव हरिभद्रेणापि स्वकृते क्वापि ग्रन्थे न कोऽपि स्वसमयादिसूचक उल्लेखः कृतः । केवलं क्वचित् क्वचित् तत्कृतग्रन्थावसाने याः काश्चन पुष्पिका लभ्यन्ते, तासामवलोकनेन वयमेतावन्मात्रं ज्ञातुं शक्नुमो यत्–तस्य सम्प्रदाय श्वेताम्बर, गच्छो विद्याधर, गच्छपतिरा चार्यो जिनभट, दीक्षागुरुर्जिनदत्तसूरि, सदुपदेशदायिनी धर्मजननी चार्या याकिनीमहत्तरा आसीत् । एतत्समग्रकथनसूचनं निम्नोद्धृतायामावश्यकसूत्रबृहद्वृत्तिपुष्पिकायामुपलभ्यते । यथा–

" समाप्ता चेयं शिष्यहिता नामावश्यकटीका । कृति सिताम्बराचार्यजिनभटनिगदानुसारिणो विद्याधरकुलतिलकाचार्यजिनदत्तशिष्यस्य धर्मतो याकिनीमहत्तरासूनोरल्पमतेराचार्यहरिभद्रस्य । "

---

८ बहुषु प्राचीनार्वाचीनेषु ग्रन्थेषु लिखितमुपलभ्यते यत् हरिभद्रसूरिणा, चतुर्दशशतसंख्याका चत्वारिंशदधिकचतुर्दशशतसङ्ख्याका', चतुश्चत्वारिंशदधिकचतुर्दशशतसङ्ख्याका वा ग्रन्था ग्रथिता, इति। प्रमाणानि च द्रष्टव्यानि प० हरगोविन्ददासविरचिते ' हरिभद्रसूरिचरित्र ' निबन्धे ( पृ० १७-१० )

९ जैनग्रन्थावली ( पृ० ९८-१०२ ), पं० हरगोविंद—हरिभद्रसूरिचरित्रम् ( पृ० २०-३० )

× एतच्चिह्नाङ्किता ग्रन्था मुद्रिताः सन्ति ।

हरिभद्रसूरेर्जीवनवृत्तविषयकाणि भिन्नभिन्नवर्णनानि अनतिप्राचीनेषु, अर्वाचीनेषु च कतिपयग्रन्थेषु किम्वदन्तीरूपेणोपलभ्यन्ते । तत्र प्रभाचन्द्रविरचिते प्रभावकचरिते[10] हरिभद्रनामको नवमः प्रबन्धः सविशेषमुल्लेखयोग्य । राजशेखरसूरिप्रणीते प्रबन्धकोषापरपर्याये चतुर्विंशतिप्रबन्धेऽपि अस्य विदुषश्चरितवर्णनं प्राप्यते[11] । एवं भद्रेश्वरनामकैकपुरातनाचार्यलिखित–'कथावली' नाम्न प्राकृतभाषामयबृहत्तरग्रन्थस्यावसानेऽपि अस्य सूरे संक्षिप्ता जीवनकथा दृश्यते[12] । तथैव, मुनिचन्द्राचार्यविरचितोपदेशपदटीकाप्रान्ते[13], सुमतिगणिगुम्फितगणधरसार्द्धशतकीयबृहद्व्याख्यायां[14] चास्य जीवनवृत्तविषयक कियन्मात्र उल्लेख कृतो दृश्यते ।

एतेषां सर्वेषां ग्रन्थानामवलोकनेन प्रादुर्भूताद् निष्कर्षाद् हरिभद्रजीवनविषयमेतावद् वृत्तं तु विश्वसनीयं प्रतिभाति यत्–स हि महात्मा पूर्वावस्थाया लब्धप्रतिष्ठः, सर्वशास्त्रनिष्णातः, वेदानुयायी ब्राह्मण आसीत् । निवासस्थानं चैतस्य चित्रकूटोऽस्ति स्म । याकिनीमहत्तरानाम्न्या एकस्या विदुष्या जैनश्रमण्या समागमेनास्य परमार्हती श्रद्धा प्रादुरभूत् । तस्या एव भगवत्याः सदुपदेशादेष जैनीं दीक्षां स्वीचकार । यतिधर्मस्वीकारानन्तरमल्पीयसैवानेहसा श्रमणसङ्घाधिपतित्वं प्राप्तः स मुनिवरो नानादेशविहरणेन जैनशासनं प्रभावयन्, विविधशास्त्रविरचनेन च जैनप्रवचनं प्रकाशयन् स्वजीवितं सफलयांचकार । पूर्वश्रुतधरसङ्कलितान् प्राकृतभाषामयान् जैनागमान् मन्दमतिमनुष्यैर्दुरवगमान् मत्वा

---

१० Peterson's 3rd Report on Sanskrit Mss p 202, and Weber, p 786

११ अस्य रचनासमय वि॰ सं॰ १३३४.

१२ अस्य रचनासमय. वि॰ स १४०५

१३ अस्या प्रणयनकालो न ज्ञात', परन्तु उक्तप्रभावकचरित्रात् प्राचीना, विक्रमीयद्वादशशताब्द्या विरचिता सम्भाव्यते । अस्या प्राचीनां हस्तलेखां अणहिलपुरपट्टने दृष्टवन्तोऽस्माभि. ।

१४ इयं टीका वि म ११७४ वर्षे समाप्तिमगमत् । एतट्टीकाप्रान्ते हरिभद्रजीवनवृत्तज्ञापकः संक्षिप्त उल्लेख एतादृश.—'यः (हरिभद्राचार्य·) किल श्रीचित्रकूटाचलचूलानिवासी प्रथमपर्याय एव स्फुटपठिताशेषव्याकरण सर्वदर्शनानुयायितर्ककर्कशमतिमतामग्रगण्य प्रतिज्ञातपरपठितग्रन्थानवबोधनाच्छिष्यभाव आवश्यकनिर्युक्तिपरावर्तनाप्रवृत्तयाकिनीमहत्तरा(ऽ)श्रयसमीपलब्ध- चक्किदुग हरिपणग—' इत्यादिगाथासूत्रो निजनिपुणोहापोहयोगेऽपि कथमपि स्वयमनुपलब्धतदर्थस्तदवगमाय महत्तरापदेशात् श्रीजिनभद्रा(टा?)चार्यपादमूलमवसर्पन्नन्तरा जिनबिम्बावलोकनसमुत्पन्नानुत्पन्नपूर्वबहलप्रमोदवशात् समुच्चारित – 'वपुरेव तवाचष्टे–' इत्यादिश्लोक सूरिसमीपोपगतावदातप्रव्रज्यो ज्यायसीं स्वसमयपरसमयकुशलतामवाप्य महत्प्रवचनवात्सल्यमवलम्ब्यमानश्चतुर्दशप्रकरणशतानि चकार ।'

१५ अस्या बृहद्व्याख्याया रचनासमाप्ति वि॰ स॰ १२९५ वर्षेऽभूत् ।

१६ अभयदेवनाम्ना सुप्रसिद्धेन नवाङ्गीवृत्तिकारेणाचार्येण पञ्चाशकप्रकरणटीकाप्रारम्भे हरिभद्रसूरेप्रशंसापर एतादृश उल्लेख कृत —"इह हि विस्फुरन्निरुपमविवेकातिशयधामनि सुषमाकालविपुलजलदपटलावलुप्यमानमाहिमनि, नितरामनुपलक्ष्यीभूतपूर्वमनादिबहुतमप्रबन्धसार्थतारतारकानिकरे, पारकृतमदितामसमाम्बरे पटुतमबोधलाभमतया सुगृहीतनामधेयो भगवान् श्रीहरिभद्रसूरि.–" इत्यनेनोल्लेखेन केचिदस्य सूरे पूर्वगतज्ञानज्ञातृत्वमपि ज्ञापयन्ति ।

तदुपकारचिकीर्षया सर्वतः प्रथमं गिर्वाणगिरा तान् विवरीतुमयमेव महर्षिरुपक्रमं कृतवान् । तदीयानां सर्वेषां ग्रन्थानां सूक्ष्मेक्षिकया प्रत्यवेक्षणेन ज्ञायते यत्—स महामनाः प्रकृत्या प्रशमरसपरिपूर्णः प्रवृत्त्या च स्पृहणीयगुणगण आसीत् । इत्यलं प्रासङ्गिकेन ।

अथ प्रकृतमनुसरामः । तत्र तावदेतद् विचारणीयम्, हरिभद्रसमयविषये केषु केषु जैनग्रन्थेषु कीदृशा उल्लेखाः समुपलभ्यन्ते ?, कानि कानि प्रमाणानि तेषामुल्लेखानां साधक—बाधकानि सन्ति ?, उपर्युक्तैः डॉ. याकोबिप्रभृतिभिः पण्डितैश्च हरिभद्रसत्तात्वेन कः समयः स्थिरीकृतः ? सोऽपि सुनिश्चितः सान्दिग्धो वा ? इति । एतानेव प्रश्नान् क्रमशः सविस्तरं विचारयामः ।

अत्र खलु हरिभद्रसमयसूचिका प्राधान्येनैकैव अज्ञातकर्तृका प्राकृतगाथा यत्र तत्र ग्रन्थे, निबन्धे वा संप्राप्यते । सा च सर्वतः प्रथमं ‘ प्रबन्धचिन्तामणि ’ नामकप्रसिद्धैतिहासिकग्रन्थप्रणेतुराचार्यमेरुतुङ्गस्यैव ‘ विचारश्रेणि ’ नामकैकजैनकालगणनाविचारात्मके लघावप्युपयुक्ते निबन्धे दृष्टिपथमवतरति[18] । यथा—

पंचसए पणसीए विक्कमकालाउ झत्ति अत्थमिओ । हरिभद्दसूरिसूरो भविआणं दिसउ कल्लाणं ॥
[ पञ्चशते पञ्चाशीते विक्रमकालात् झटित्यस्तमितः । हरिभद्रसूरिसूर्यो भव्यानां दिशतु कल्याणम् ॥]

अस्या गाथाया अयं भावः—पञ्चाशीत्यधिकपञ्चशततमे विक्रमाब्दे हरिभद्रसूरिः स्वर्गं गत इति ।

इयमेव गाथा प्रद्युम्नसूरिणा[20] विचारसारप्रकरणे, समयसुन्दरगणिना[21] च ‘ गाथासहस्री ’ नामकप्रबन्धे समुद्धृताऽस्ति । एतस्या एव गाथाया आशयमादाय कुलमण्डनसूरिणा विचारामृतसङ्ग्रहे[22], धर्मसागरोपाध्यायेन च तपागच्छपट्टावल्यां[23] लिखितमस्ति यत्—महावीरनिर्वाणानन्तरं पञ्चपञ्चाशदधिकसहस्रतमे वर्षे व्यतीते हरिभद्राचार्यो दिवं गत इति । एवमेतस्या गाथाया अवतरणमाशयानुसरणं वा अन्यत्रापि अनेकेषु स्थलेषु कृतं दृश्यते[24] ।

---

१७ मेरुतुङ्गाचार्येण ‘प्रबन्धचिन्तामणि’ ग्रन्थः वि० सं० १३६१ वर्षे समाप्तिं नीतः ।

१८ अस्मत्पार्श्वेऽस्य निबन्धस्यैकः षट्पत्रात्मकः प्राचीनो हस्तलेखोऽस्ति, तस्य तृतीयपृष्ठे इयं गाथाऽस्ति ।

१९ वस्तुत इयं गाथा मेरुतुङ्गाद् विशेषप्राचीनाऽस्ति, परन्तु तत्कर्तुर्नाम-समयादयो न ज्ञायन्ते, अतो मेरुतुङ्गाचार्यादेव तस्या आविर्भावः स्वीक्रियते ।

२० अस्य सूरेः सत्तासमयो न ज्ञातः, कदाचित्, मेरुतुङ्गवदयमपि चतुर्दशशताब्द्यामेव जातो भवेत् ।

२१ अयं विद्वान् विक्रमीयसप्तदशशताब्दीमध्यवर्ती ।

२२ ‘ वीरनिर्वाणात् सहस्रवर्षे पूर्वश्रुतं व्यवच्छिन्नम्, श्रीहरिभद्रसूरयस्तदनु पञ्चपञ्चाशता वर्षैर्दिवं प्राप्ताः ’ विचारामृतसङ्ग्रहः ।

२३ ‘ श्रीवीरात् १०५५ विक्रम ५८५ वर्षे याकिनीसूनुः श्रीहरिभद्रसूरिः स्वर्गभाक् । निशीथ-बृहत्कल्पभाष्या-ऽऽवश्यकनिर्युक्त्यादिचूर्णिकाराः श्रीजिनदासगणिमहत्तरादयः पूर्वगतश्रुतधरश्रीप्रद्युम्नक्षमाश्रमणादिशिष्यत्वेन हरिभद्रतः प्राचीना एव यथासम्भवकालभाविनो बोध्याः । ’-तपागच्छपट्टावली ।

२४ यथाऽनेकेषु जीर्णपत्रेषु निम्नालिखिता गाथा दरीदृश्यते—

‘ वीराओ वयरो वासाण पणसए दससएण हरिभद्दो ।
तेरसहि बप्पभट्टी अट्ठहिं पणयाल वलहिखओ ॥ ”

एतत्कथनसंवादी समुल्लेखो मुनिसुन्दरसूरिविरचित 'गुर्वावली' नामपद्यप्रबन्धेऽपि संप्राप्यते। मुनिसुन्दरसूरिणा श्रमणभगवत्-श्रीमहावीरशिष्यपरम्परायामष्टाविंशे पट्टे प्रतिष्ठितं मानदेवनामानमाचार्यं, परिचाययता हरिभद्रस्तन्मित्रत्वेन, अर्थात् तत्समसमयकत्वेनोपदर्शित[२५]। पट्टावल्यादिप्रबन्धगणनानुसारेण मानदेवाचार्यस्य समयोऽपि विक्रमीया षष्ठी शताब्दी इति मन्यते।

एवं चोक्तग्रन्थकाराणां मतेन हरिभद्रस्य सत्तासमयः विक्रमीया षष्ठी शताब्दी; स्वर्गवाससंवत्सरश्च पञ्चाशीत्यधिकपञ्चशतीतमः ( खृष्टाब्दे ५२९ ) समस्ति।

अथ–उपर्युक्तसमयस्य सत्यताया साधक–बाधकप्रमाणपुरस्सरं परीक्षणे क्रियमाणे, तद्बाधकं तत्र च सविशेषसन्देहोत्पादकमेकमीदृशमपि बाह्यप्रमाणमुपलभ्यते, यदितरबाह्यप्रमाणेभ्यः प्राचीनं प्रबलं च भासते। एतच्च प्रमाणं सिद्धर्षिकृतायामुपमितिभवप्रपञ्चायां कथायां प्राप्यते। इयं च कथा द्विषष्ट्यधिकनवशतीतमे ( ९६२ ) संवत्सरे ज्येष्ठशुक्लपञ्चम्यां गुरुवासरे पुनर्वसुनक्षत्रस्थे च चन्द्रमसि समाप्ताऽभूत्। एतदर्थकः स्पष्टनिर्देश उक्तकथाप्रशस्तौ सिद्धर्षिणा स्वयं कृतोऽस्ति। यथा

'संवत्सरशतनवके द्विषष्टिसहितेऽतिलङ्घिते चास्याः। ज्येष्ठसितपञ्चम्यां पुनर्वसौ गुरुदिने समाप्तिरभूत्॥'

यद्यपि चात्र ग्रन्थकृता केवलं सामान्यसंवत्सरस्वरूपसूचकः 'संवत्सर' इत्येव शब्दः प्रयुक्तः, तेन नैतद् विज्ञायते, वीर-विक्रम-शक-गुप्तादिसंवत्सराणां मध्ये कः संवत्सरो ग्रन्थकारस्येष्ट इति। तथापि संवत्सरेण सह मास–तिथि–वार–नक्षत्राणामपि स्पष्टनिर्देशसत्त्वात् ज्योतिषानुसारेण गणनया 'एष संवत्सरो विक्रमीय एव' इति स्पष्टं ज्ञातुं शक्यते। ज्योतिर्गणनानुसारेण यदि गणयामस्तर्हि ९०६ खृष्टाब्दीय 'मे ( May )' मासस्य प्रथमदिनेन सह सिद्धर्षिनिर्दिष्टस्यास्य दिवसस्यैक्यं दृश्यते। खृष्टाब्दीये तस्मिन् दिवसेऽपि वारो गुरुः, चन्द्रश्च सूर्योदयादारभ्य मध्याह्नोत्तरकालं यावत्पुनर्वसुनक्षत्रस्थ एवासीत्।

अस्या उपमितिभवप्रपञ्चायाः कथायाः प्रशस्तौ सिद्धर्षिः निम्नोद्धृतेषु पद्येषु हरिभद्राचार्यस्य 'धर्मबोधकर' गुरुत्वेन समुल्लिख्य भूरिशः प्रशशंस। यथा –

" आचार्यहरिभद्रो मे धर्मबोधकरो गुरुः। प्रस्तावे भावतो हन्त स एवाद्ये निवेदितः॥
विषं विनिर्धूय कुवासनामयं व्यचीचरद् यः कृपया मदाशये।
अचिन्त्यवीर्येण सुवासनासुधां नमोऽस्तु तस्मै हरिभद्रसूरये॥
अनागतं परिज्ञाय चैत्यवन्दनसंश्रया। मदर्थैव कृता येन वृत्तिर्ललितविस्तरा॥ "

---

[२५] अभवद् गुरुः श्रीहरिभद्रमित्रं श्रीमानदेवः पुनरेव सूरिः।
यो मान्द्यतो विस्मृतसूरिमन्त्रं लेभेऽम्बिकास्यात् तपसोज्जयन्ते॥
अञ्चलगच्छ पौर्णमिकगच्छादिपट्टावलीष्वपि किञ्चित् शब्दपरिवर्तनं कृत्वा तत्कर्तृभिरयमेव पद्यः समुद्धृतो दृश्यते। यथा –
विद्यासमुद्रहरिभद्रमुनीन्द्रमित्रं सूरिर्बभूव पुनरेव हि मानदेवः।
मान्द्यात् प्रयातमपि योऽनघसूरिमन्त्रं लेभेऽम्बिकामुखगिरा तपसोज्जयन्ते॥

अनेनावतरणेनैतदवभासते —श्रीहरिभद्राचार्यः सिद्धर्षेर्धर्मबोधकरो गुरुरभूत् । तत्कृतां च प्रसिद्धतरां ' ललितविस्तरा ' नाम्नीं चैत्यवन्दनसूत्रवृत्तिं सिद्धर्षिः स्वकृत एव निर्मितां दर्शयति ।

अनेनोल्लेखनास्माभिः कल्प्यते यत्—एतत्कथनमवलम्ब्यैव राजशेखरेण प्रबन्धकोषे,[19] मुनिसुन्दरेण उपदेशरत्नाकरे,[20] रत्नशेखरेण च श्राद्धप्रतिक्रमणसूत्रवृत्तौ[21] सिद्धर्षिर्हरिभद्रशिष्यत्वेन वर्णितः । एवं पट्टावालगच्छीयायामेकस्यां प्राकृतपट्टावल्यामपि[22] सिद्धर्षि–हरिभद्रयोः समसमयवर्तित्वं लिखितं समुपलभ्यते ।

---

१९ [ सिद्धर्षि ] विशेषतर्कान् जिघृक्षुर्बौद्धान्तिकं जिगमिषुर्गुरूनवादीत् । प्रेषयतात् बौद्धपार्श्वे । गुरुभिर्भणितम् तत्र मा मा गमः परावर्तो भावी । ऊचे युष्मान्तेऽपि नैव स्यात्, पुनर्गुरव प्रोचुः-तत्र गतः परावर्त्स्यसे चेत् तदाऽस्मद्दत्तं वचनत्राऽऽगन्तव्यं स्मरिष्यसि । ... स । गतस्तत्र पठितुं लग्न । ... परावर्तितं मन । तद्दीक्षां लात्वा । ... श्रीहरिभद्र ययौ । ... एवं ... दानेन प्रतिबोधितः २१ ... गुरुभिश्चिन्ति ... आयु क्षयेण मिथ्यात्वित्वे मृतस्य दीर्घभवभ्रमणं भूत् । पुनरपि २१, वार ... ललितविस्तराख्या चैत्यवन्दनावृत्तिः सतर्का कृता । तदागमे पुस्तिका पाटपीठे मुक्त्वा गुरवो बहिरगुः । तत्पुस्तिकापरामर्शाद् बोधः सम्यक् । ततस्तुष्टो निश्चलमना प्राह

नमोऽस्तु हरिभद्राय तस्मै प्रवरसूरये । मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा ॥ "

२० ... पुनः कुगुरोस्सिद्धत्या सम्यग्दर्शन ज्ञान चारित्राणि वमन्ति ते शुभधर्मवासप्रतीत्य वाम्या । ... श्रीहरिभद्रसूरिशिष्यश्रावकबुधश्रीललितविस्तरामतिबुद्धश्रीसिद्धवत् । '

२१ ... हरिभद्र सूरिशिष्य सिद्ध ... । स सौगतमतरहस्यग्रहणार्थं गतः । तत ... गुरुभिर्बोधितो बौद्धानामपि ... । पुनस्तैर्भावित । ... तत्प्रतिबोधनार्थं ... ललितविस्तराख्य ... वृत्त्या दृढं प्रतिबुद्धः ... तस्थौ । इति ।

२२ ... गायरिआ ... सिरीमालपुरं गया । तत्थ धनो नाम सिट्ठी जिणमावओ । तस्स सिद्ध सिद्धा णाम रायपुत्तो । सा ... दिक्खिओ । अईव तक्कबुद्धिओ ... तक्क अत्थि णवा ' बुग्गायरिएण ( मग्गायरिएण ' ) कहिअ - बुद्धमए अत्थि । ग... माढत्तो । मग्गरिसिणा कहिअ मा गच्छ ... भावी । तेण कहिअ इत्थ आगमिस्सामि ... सम्मत्तहीणो आगओ । बुग्गा ( मग्गा ) यरिएण बोहिओ पुणो गओ । एव पुणो पुणो गमणागमणं । तदा मग्गायरिएण विजयाणन्दसूरिपरंपरासीसो हरिभद्दायरिओ महत्तरो बोहत्थ ... बुद्धिमतो विण्णविओ-सिद्धो ण ठाति । हरिभद्देण कहिअ कोवि उवाओ ... उवाय करिस्सामि । सो आगओ बाहिओ ण ठाति । ताहे हरिभद्देण बोहणत्थ ललिअवित्थरा वित्ती रइआ तक्कमयरा । हरिभद्दो (हेण णिअकाल ... मग्गायारियस्स समप्पिआ । ... तओ । तओ कालंतरेण आगओ । गग्गेण दिण्णा । सो वि ... अहो ! ... हरिभद्दगुरू । सम्मत्त पडिवन्ना जिणवयणं भाविंयपा उग्गतव करमाणो विहरइ ।

एतानुल्लेखान् पूर्वोक्तप्राकृतगाथानिर्दिष्टहरिभद्रस्वर्गगमन-समयस्य बाधकत्वेन सूचयन्तः के-चन सिद्धर्षि–हरिभद्रयोः समकालीनत्वम्—अर्थात् हरिभद्रं सिद्धर्षेः साक्षाद्गुरुत्वेनाऽऽमनन्ति ।

डॉ. याकोबीमहाशयस्यापि इदमेव मतं सम्मतम् । एतन्मतं सविशेषं समर्थयितुं च तेन हरिभ-द्रविरचितादेकस्माद् ग्रन्थात् कानिचिदान्तरप्रमाणान्यपि समुपस्थापितानि ।

तथाहि—षड्दर्शनसमुच्चयनामकप्रबन्धे हरिभद्रसूरिणा दिग्नागशास्त्रीयबौद्धन्यायस्य संक्षेपेण सारो दर्शितः । तत्र प्रत्यक्षप्रमाणस्य लक्षणमेवं प्रदर्शितमस्ति-

'प्रत्यक्षं कल्पनापोढमभ्रान्तं तत्र बुध्यताम् ।'

इदं च लक्षणं, न्यायबिन्दुगतेन आचार्यधर्मकीर्तिलक्षितेन प्रत्यक्षलक्षणेनाक्षरशः साम्यं भज-ति । बौद्धन्यायप्रतिष्ठापकाचार्यदिग्नागेन तु प्रमाणसमुच्चयादौ

'प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम् ।'

इत्येवं प्रत्यक्षस्य लक्षणं विहितं दृश्यते । तत्र 'अभ्रान्तम्' इति पदं न प्रयुक्तम् । इदं हि आवश्यकं पदमाचार्यधर्मकीर्तिलक्षिते प्रत्यक्षलक्षणे संधीयते । अत एतद् ज्ञायते हरिभद्रेणापि यदिदं 'अभ्रान्तम्' पदं प्रत्यक्षलक्षणे निवेशितं तद् धर्मकीर्तेरेवानुकरणम् । धर्मकीर्तेः सत्तासमयः प्राकृत-गाथादर्शिताद् हरिभद्रीयस्वर्गगमनसंवत्सरात् पश्चात् शताब्दीप्रमाणं निर्धार्यते पुराविद्भिः । अत एव धर्मकीर्तिलक्षितप्रत्यक्षलक्षणानुकरणकर्तुर्हरिभद्रस्य पूर्वोक्तगाथया सूचितः स्वर्गगमनसमयः-असम्बद्ध प्रतिभाति। एवमन्यान्यपीदृशानि कतिपयानि प्रमाणानि स्वमतसमर्थनार्थं तेन विदुषा समुपन्यस्तानि सन्ति ।

डा. याकोबीमहाशयेनेत्थं हरिभद्रस्य धर्मकीर्त्युत्तरकालवर्तित्वं यदनुमितं तत्त्वस्मन्मतेनापि सत्य-मेव । यतो हरिभद्रेण न केवलं धर्मकीर्तिकृतं प्रत्यक्षलक्षणमेवानुकृतम्, किन्तु स्वकीयेषु अनेकान्तज-यपताकादिग्रन्थेषु धर्मकीर्तिकृतहेतुबिन्दुप्रभृतिभ्यो ग्रन्थेभ्यः अनेकान्यवतरणान्यपि समुद्धृतानि, असकृच्च तस्य महामतेर्नामग्राहं निर्देशोऽपि कृतः । परन्तु, एतावतैव हेतुना सिद्धर्षि-हरिभद्रयोः समसमयवर्तित्वानुमानं वयं न मन्यामहे । यत—अस्माभिरेकमेतादृशमपि निश्चितं प्रमाणमुपलब्धम्, यत् तयोः समसमयवर्तित्वसचकाटिवः स्पष्टं विरोधमावहति ।

एवम्, डॉ. याकोबीमतेन सुनिश्चितेऽपि समये बलवतः सन्देहस्य समुत्पन्नत्वात् पुनरपि तन्नि-र्णयाय गवेषणीयमारब्धमस्माभिः । गवेषणान्ते च यो निष्कर्षः समुपलब्धः स एवाधुनाऽत्र विद्वत्स-माजे सविस्तरं पुरस्क्रियते ।

तत्र, स्वगवेषणाफलभूतत्वेन यानि प्रमाणान्याश्रित्य हारिभद्रीयसत्तासमयविषये सविस्तरो-हापोहपूर्वकं स्थिरीकर्तव्यस्य स्वाभिप्रायस्य वर्णनात् पूर्वं पाठकानां स्मृतिसौकर्यायात्रैव तत्सारं संक्षि-प्य निवेदयामः ।

---

३० उपमितिभवप्रपञ्चाया कथाया प्रस्तावनायां, पृ० द्रष्टव्यम् ।

३१ अग्रे वक्ष्यमाणं द्रष्टव्यम् ।

तथा हि—हरिभद्राचार्यो नोक्तप्राकृतगाथानिर्दिष्टसमयानुसारेण षष्ठ्यां शताब्द्यां विद्यमानोऽभूत्, नापि च याकोबीप्रभृतिपण्डितकथनानुसारेण सिद्धर्षिवद् दशम्यां शताब्द्याम्, परन्तु, एतयोर्द्वयोः शताब्द्योः समान्तरालकाले—अर्थाद् अष्टम्यां शताब्द्यां स सूरिः श्रमणभगवत्-श्रीमहावीरतीर्थंकरप्रबोधित-अनेकान्तवाद-विजयद्योतिकां जयपताकां भारतवर्षीय आध्यात्मिके गगनाङ्गणे उच्चैस्तरां सगौरवं समुल्लासयन् विहरति स्म ।

अस्मदीयमेतन्मतमाकलय्य जिज्ञासूनां मनस्ययं प्रश्न उत्पद्येत—यदि पूर्वोक्तरीत्या सिद्धर्षिणा स्वकथाप्रशस्तौ हरिभद्रः स्वकीय-धर्मबोधकरगुरुत्वेन वर्णितः, तदा तयोर्मध्ये शताब्दीद्वयप्रमितमन्तरं कथं सङ्गच्छेत ? । तत्रेदं समाधानम्—हरिभद्रमुद्दिश्य सिद्धर्षिकृतस्य धर्मबोधकरगुरुत्ववर्णनस्य तात्पर्यं न खलु साक्षाद्गुरुत्वे, किन्तु परम्परागुरुत्वे—अर्थात् परोक्षगुरुत्वे—विज्ञेयम् । यद्यपि, डॉ. याकोबीमहाशयेन सिद्धर्षिकृतं तद्वर्णनं साक्षाद्गुरुत्वेनैव स्वीकृत्य सिद्धर्षि-हरिभद्रयोः परस्परं वास्तविकगुरु-शिष्यभावसम्बन्धं दर्शयितुं प्रयासः कृतः । परन्तु, तत्कृतकल्पनाया भ्रान्तिमूलत्वमस्मदीयेन निम्नोल्लिखितकथनेन स्पष्टं भविष्यतीति ।

सिद्धर्षेर्वास्तविकगुरुस्तु देल्लमहत्तरशिष्यो गर्गर्षिरासीत् । एतद्विषयक उल्लेखः स्पष्टतया तस्या एव कथायाः प्रशस्तौ समस्य पद्ये कृतो वर्तते । यथा-

"सद्दीक्षादायकं तस्य स्वस्य चाहं गुरूत्तमम् । नमस्यामि महाभागं गर्गर्षिमुनिपुङ्गवम् ॥"

वयं त्वेवं सम्भावयामः—हरिभद्रविरचिताया ललितविस्तराख्यवृत्त्या अवलोकनेन सिद्धर्षेर्मिथ्या-भ्रान्तिर्विनष्टा, सम्यग्दृष्टिश्च समुत्पन्ना अभवत् । अतस्तेन स्वकथाप्रशस्तौ, पूर्वं वास्तविकगुरुं वर्णयित्वा, पश्चात् पद्यान्तरे च 'गुरु' शब्दं न प्रयुज्य प्रकारान्तरेण सद्धर्मप्राप्तौ निमित्तभूतत्वात्—हरिभद्रोऽपि धर्मबोधकरगुरुत्वेन वर्णित इति । 'सिद्धर्षेर्हरिभद्रस्य साक्षात्कारः सञ्जातः' एतद्विषयकमल्पीयस्त्वेकमपि वाक्यं तस्यां महत्यां कथायां क्वापि न दृष्टिपथमायाति । प्रत्युत, तद्विपरीतार्थानि किन्तु नैकानि वाक्यानि दर्शयितुं शक्यन्ते ।

तथा हि—पूर्वोल्लिखितेषु प्रशस्तिगतहरिभद्रप्रशंसागर्भितेषु त्रिषु पद्येषु, अन्तिमपद्यस्य भावार्थे विशेषेण विचारणीयः । अस्मिन् पद्ये सिद्धर्षिरिदं सूचयति—आचार्यहरिभद्रः [ विशिष्टज्ञानबलेन ] 'अनागतम्' अर्थाद् भविष्यत्कालवर्तिनं मां ज्ञात्वा, [ मन्ये ] मम हितायैव 'ललितविस्तरा' नाम्नीं चैत्यवन्दनसूत्रवृत्तिं विरचितवान्, इति । अत्रत्य 'अनागतं' शब्दस्य 'भविष्यत्कालवर्तिनम्' इत्य-

---

३१ ललितविस्तरावृत्त्या उपरि पञ्जिकानाम्नीटीकाकर्त्रा मुनिचन्द्रसूरिणा स्वटीकाप्रारम्भे निम्नाङ्कितं पद्यं सन्दृब्धं तस्यावलोकनेनापि अस्मत्कृतसम्भावना सप्रमाणा प्रतिभाति यथा-

'या बुद्ध्वा किल सिद्धसाधुरखिलव्याख्यातृचूडामणिः
सम्बुद्धः सुगतप्रणीतसमयाभ्यासाचलच्चेतनः ।
यत्कर्तुः स्वकृतौ पुनर्गुरुतया चक्रे नमस्यामसौ
को ह्येतां विवृणोतु नाम विवृतिं स्मृत्यै तथाप्यात्मनः ॥

तदर्थं विहाय न कश्चिदपरोऽर्थोऽत्र सङ्गच्छते । पुनः, एतद्भावार्थसंवादि कथनं कथाभागेऽपि प्रथमे प्रस्तावे स्पष्टतया लिखितं दृश्यते । यथा—

" ये च मम सदुपदेशदायिनो भगवन्तः सूरयस्ते विशिष्टज्ञाना एव, यतः कालव्यवहितैरनागतमेव तैर्ज्ञातः समस्तोऽपि मदीयवृत्तान्त । स्वसंवेदनसिद्धमेतदस्माकमिति[33] । "

अस्मिन्नवतरणे सिद्धर्षिणा ' ये च मम सदुपदेशदायिनो भगवन्तः सूरय ' इत्यादिवाक्येन उपनयरूपेण यस्य ' धर्मबोधकर ' सूरेर्वर्णनं कृतम्, तद् हरिभद्राचार्यमेव लक्ष्यीकृत्य; इति प्रशस्तिगतेन हरिभद्रप्रशंसात्मकेन प्रथमपद्येन ( ' आचार्यहरिभद्रो मे धर्मबोधकरो गुरुः । प्रस्तावे भावतो हन्त स एवाद्ये निवेदितः । इत्यनेन ) स्पष्टमवगम्यते । पुनश्चास्मिन्नेवावतरणे ' कालव्यवहितैरनागतमेव ' इत्यादि-वाक्यगतेन ' कालव्यवहितै ' इति, ' अनागत ' इति च पदद्वयेन क्रमश्च सदुपदेशदायिनां चाभिमतसूरीणां स्वस्मात् सुदूरपूर्ववर्तित्वम्, स्वस्य च व्यवहितं तदुत्तरवर्तित्वं स्पष्टमेवावेदितम् ।

एवं चोक्तैः सिद्धर्षेरेव वचोभिः ' सिद्धर्षि-हरिभद्रौ न समकालवर्तिनौ, किन्तु तयोर्मध्ये कालकृतं किमपि व्यवधानमवश्यमासीत् । ' इति निर्विवादं सिद्ध्यति ।

किञ्च, तयोर्द्वयोः समकालवर्तित्वाभावनिश्चायकमधिकं स्पष्टमन्यत् प्रमाणं प्राकृतभाषानिबद्धायां ' कुवलयमाला ' नाम्न्यां बृहत्यां कथायामुपलभ्यते । इयं च कथा दाक्षिण्यचिह्नोपनाम्ना उद्द्योतनसूरिणा विरचिता[34] । अस्या रचना, एकदिवसन्यूने सप्तशतीतमे शकीय संवत्सरे—अर्थात ६९९

---

33 उपमि० पृष्ठ ८० पंक्ति ८ ।

34 एतस्या कथाया उल्लेख प्रभावकचरित्रेऽपि सिद्धर्षिप्रबन्धे समुपलभ्यते । तत्र अस्या कर्ता दाक्षिण्यचिह्नसूरि सिद्धर्षेर्गुरुबन्धुत्वेनोपवर्णित । सिद्धर्षे स्वकीयाया कथाया प्रणयनेऽपि इयमेव कथा निमित्तीभूताऽभूद् इत्यपि तत्र स्पष्टं निर्दिष्टमास्ति । चरित्रकारस्यैतत्कथन कय सम्यग नावगच्छाम । यत कुवलयमाला-उपमितिभवप्रपञ्चयोर्द्वयो कथयो प्रशस्तिगताभ्यां समयज्ञापकाभ्या निर्देशाभ्यां स्पष्टमेव ज्ञायते-यत् तयो कथयो रचनासमय समविंशत्यधिकशतवर्षप्रमाण व्यवधानमासीत् ।

प्रभावकचरित्रस्य एतद्विषयक उल्लेख ईदृश —

" सूरिर्दाक्षिण्यचन्द्राख्यो गुरुभ्रातास्ति तस्य स । कथां कुवलयमालां चक्रे शृङ्गारनिर्भराम् ॥
किञ्चित्सिद्धकृतग्रन्थमोत्प्रास माऽवदत्तदा । लिखितं किं न तो ग्रन्थस्तवकथायमाक्षरै ॥
शास्त्र श्रीसमरादित्यचरित कीर्त्यते भवि । पद्मासिम्पतुना जीवा क्षुद्रहार न जानत ॥
अथोत्पत्तिरसाधिक्यमारा किञ्चित्कथाऽपि मे । अहो ! ते लेखकस्यैव ग्रन्थ पुस्तकपूरण ॥
अथ सिद्धकवि प्राह मनो दूनोषि नो परम् । वयोऽतिक्रान्तपाठानामीदृशी कविता भवेत् ॥
का स्पर्धा समरादित्यकवित्वे पूर्वसूरिणा । खद्योतस्येव सूर्येण मादृग्मन्दमतेरिह ॥
इत्थमुक्त्वा जिनस्वान्तस्तेनासौ निर्ममे बुध । अन्यदुर्बोधसम्बद्धां प्रस्तावाष्टकसम्भृताम् ॥
रम्यामुपमितिभवप्रपञ्चाख्यां महाकथाम् । सुबोधकाथिनो विद्वज्जनमाक्षिविधूननीम् ॥
ग्रन्थ व्याख्यानयोग्य यदेन चक्र शमाश्रयम् । अत प्रभृति सङ्घोऽस्य व्याख्यातुबिरुद ददौ ॥

प्रभावकचरित्रम् पृष्ठ २०१ ०२

डॉ याकोबीमहाशयेनैतेषां श्लोकानां पुनराङ्ग्लभाषायां विपरीत एवाऽनुवादः कृत । तेन हि कुवलयमालाकर्तां सिद्धर्षेरत्र कृतित्वेन विज्ञाय तदनुरूप एवार्थो लिखित. ।

शकवर्षीयचैत्रकृष्णचतुर्दश्याम्, समाप्तिमगमत् । एतदर्थको निर्देश कथाकृतैव प्रशस्तिमान्ते कृतोऽस्ति । यथा—

' .. जइ चोद्दसी।ए चित्तस्स किण्हपक्खम्मि । निम्मविया बोहकरी भव्वाणं होउ सव्वाणं ॥ '

....      .      ..      ....      .      .

" सगकाले वोलीणे वरिसाण सएहिं सत्तहिं गएहिं । एगदिणेणूणेहिं एस समत्ता वरण्हम्मि ॥"

बाणकविकृतायां हर्षचरिताख्यायिकायाम्, धनपालकविविरचितायां च तिलकमञ्जर्यामिव एतस्यामपि कथायामादौ कविना कतिपये प्राचीनाः कवयः प्रशंसिताः । तत्र प्रान्ते हरिभद्रसूरिरपि प्रशमरसपरिपूर्णं ' समरादित्य ' चरित्रकर्तृत्वेन सम्यक् प्रशंसितः ।

' जो इच्छइ भवविरहं भवविरहं को न वन्दए (न्द ? ) सुयणो ।
समयसयसत्थगुरुणो समरमियंका ( ंराइच्चा ! ) कहा जस्स ॥ '[१६]

( एवं हि कथायामन्तेऽपि प्रशस्तिभागे हरिभद्रस्य स्तवः वर्तते; किन्तु, विशेषविचारणीयत्वात् तद्विषये पुरस्ताद्विचारं करिष्यामः । )

अनेन प्रमाणेन स्पष्टमेव यत्—हरिभद्रस्य, सप्तशततमात् ( ७०० ) शकाब्दात्—अर्थात्, पञ्चत्रिंशदधिकाष्टशततमात् ( ८३५ ) विक्रमाब्दात्, अष्टसप्तत्यधिकसप्तशततमात् ( ७७८ ) खृष्टाब्दाद् वा - अर्वाचीनत्वं कथमपि नाभ्युपगन्तुं शक्यते ।

अथात्रायमपरः प्रश्न उद्भवति —' यदि हरिभद्रस्य ' कुवलयमाला-कथा ' गतेनोक्तेनासन्दिग्धप्रमाणेन सिद्धर्षिसमकालवर्तित्वं न सिद्ध्यति, तदा पुनः पूर्वोक्तप्राकृतगाथाप्रामाण्येन तस्य विक्रमीयषष्ठशताब्दीवर्तित्वस्वीकारे कः प्रत्यवायः ? ' तत्रापीदं समाधानम्—एतत्प्रश्नप्रयुक्तेन हरिभद्रीयानेकग्रन्थप्रत्यवेक्षणेनास्माकमेतादृशानि बहूनि प्रमाणानि प्राप्तानि यानि तत्प्राकृतगाथाप्रामाण्यस्य बलवद्बाधकानि सन्ति । तेषां (प्रमाणानां) ऐतिहासिकदृष्ट्या पौर्वापर्यपर्यालोचनायां कृतायां हरिभद्रस्य गाथादिनिर्दिष्टं पञ्चाशीत्यधिकपञ्चशततमे ( ५८५ ) विक्रमाब्दे स्वर्गगमनं कथमपि साधयितुं न शक्यते ।

वयं पूर्वमेवावोचाम, यत्—हरिभद्रेण स्वरचितेषु ग्रन्थेषु प्रमाणतया नैकेषां ब्राह्मण-बौद्ध-जैनशास्त्रकाराणां विचाराः, नामानि च लिखितानि दृश्यन्ते । तत्र सुपर्यालोचितसमयानां कतिपयव्यक्तीनां पूर्वापरीभावानुसन्धानेनास्मत्कृतस्य प्राकृतगाथाप्रामाण्यनिराकरणस्य सत्यता सेत्स्यति, तथा प्रस्तुतविषयस्य निर्णयोऽपि सुनिश्चितो भविष्यति ।

अथात्र प्रसङ्गवशाद् विदुषां परिचयाय हरिभद्रेण स्वग्रन्थेषु स्मृतानि भिन्नभिन्नशास्त्रकाराणां नामधेयानि तावद् निर्दिश्यन्ते—

---

१५ ' डेक्कनकालेज ' स्थितराजकीयग्रन्थसङ्ग्रहस्थपुस्तकम् । पृ० १३३

१६ तदेव पुस्तकम्, पृ० ०,

| ब्राह्मणाः— | बौद्धाः— | जैनाः— |
|---|---|---|
| अवधूताचार्यः । | कुक्काचार्यः । | अजितयशाः । |
| आसुरिः । | दिवाकर ( ? ) । | उमास्वाति । |
| ईश्वरकृष्णः । | दिग्नागाचार्यः । | जिनभद्रक्षमाश्रमण । |
| कुमारिलः । | धर्मपालः । | देववाचकः । |
| पतञ्जलिर्भाष्यकार । | धर्मकीर्ति । | भद्रबाहु । |
| पतञ्जलिर्योगाचार्यः । | धर्मोत्तरः । | मल्लवादी । |
| पाणिनिर्वैयाकरण । | भदन्तः । | समन्तभद्र । |
| भगवद्गोपेन्द्र । | भदन्तदिन्न । | सिद्धसेनदिवाकर । |
| भर्तृहरिर्वैयाकरण । | वसुबन्धुः । | |
| विन्ध्यवासी । | शान्तिरक्षित । | |
| शिवधर्मोत्तरः । | शुभगुप्त । | |

( १ ) अस्यां नामावल्यां वैयाकरणभर्तृहरेरपि निर्देशो दृश्यते । अस्य हि महावैयाकरणस्य नामैव हरिभद्रेण ' अनेकान्तजयपताकायां ' द्वित्रेषु स्थलेषु स्मृतम्, उद्धृतानि च ' वाक्यपदीय ' नामकात् प्रसिद्धात् तदीयग्रन्थात् कानिचित् पद्यानि । तथा हि—

( 1 ) आह च शब्दार्थतत्त्वविद् [ भर्तृहरि —टीका ]

" वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन जायते ॥ " इति '

( 2 ) उक्तं च भर्तृहरिणा— " यथानुवाकः श्लोको वा । " इति '[3]

खृष्टीयसप्तमशताब्द्युत्तरभागे भारतभ्रमणकारिण ' इत्सिंग ' नामकस्य चीनदेशवास्तव्यस्य [illegible] कथनानुसारेण, अध्यापक–काशीनाथ–बापू–पाठकमहाशयेन स्वालिखिते ' भर्तृहरि —कुमारिल ' इत्येतन्नामके आङ्ग्लभाषानिबद्धे निबन्धे, " भर्तृहरेर्मृत्युसमयः पञ्चाशदधिकषट्शतात्मके ( ६५० ) खृष्टाब्दे ( ६०३–४ विक्रमाब्दे ) सप्रमाणं स्थिरीकृतः । तत्रैव निबन्धे पुनः, भर्तृहरिकृत-वाक्य-पदीय-गतविचाराणां तन्त्रवार्तिकनाम्नि प्रसिद्धे ग्रन्थे अनेकशः खण्डितत्वात् तत्कर्तुर्महामीमांसकस्य कुमारिलस्यापि समसप्तशततमे ( ७०० ) तमखृष्टाब्दीनिकटे विद्यमानत्वं निर्णीतम् ।

इतश्च–हरिभद्रेण स्वकृत ' शास्त्रवार्तासमुच्चय ' नामकग्रन्थस्य चतुर्थस्तबकगतस्य -

---

३७ अनेकान्तजयपताका । अहमदाबाद मुद्रिता ) पृ० ४१, काश्यां मुद्रित वाक्यपदीय प० ४८ – ९ उपरि द्रष्टव्यम् ।

३८ वाक्यपदीये सम्पूर्णः श्लोक एतादृशः —

" यथानुवाकः श्लोको वा सोढत्वमुपगच्छति । आवृत्त्या, न तु स ग्रन्थः प्रत्यावृत्या निरूप्यते ॥ [illegible] ॥ "

३९ ज० रा० ए० सो० बा० ब्रा० पु० [illegible], पृ० [illegible]

" आह चालोकवद्वेदे सर्वसाधारणे मति । धर्माधर्मपरिज्ञाता किमर्थं कल्प्यते नरः ? ॥
इत्यस्य श्लोकस्य स्वोपज्ञव्याख्यायां ' आह च–कुमारिलादि ' इत्यनेन वाक्येन प्रत्यक्षं कुमारिलस्यापि नाम उल्लिखितमुपलभ्यते । तथा–अस्य श्लोकस्य पूर्वार्द्धमपि ' मीमांसाश्लोकवार्तिकादेव आदिशब्दपरावर्तनेन तदवस्थं समुद्धृतमस्ति । अतो निश्चीयते–हरिभद्रः सप्तशतीतम ( ७०० ) खृष्टाब्दवर्तिनः कुमारिलादर्वाचीनः, सुतरां समकालीनो वा, इति ।

( २ ) अपि च–अनेकान्तजयपताकायामेव बौद्धतार्किकचूडामण्योर्धर्मपाल–धर्मकीर्त्याचार्ययोरपि हरिभद्रसूरिणा स्पष्टतया नामोल्लेखः कृतोऽस्ति । तत्रापि ' न्यायवादि '-धर्मकीर्तेस्तु नामधेयं प्रायः पञ्चाशत्कृत्वः संस्मृतम्, अवतारितं च तत्कृताद् ' हेतुबिन्दु ' प्रभृतिप्रमाणग्रन्थाद् अनेकावतरणजातम् । उदाहरणार्थं कानिचिदवतरणान्यत्र प्रदर्श्यन्ते । यथा—

( १ ) ' उक्तमत्र न–अस्माकं पूर्वाचार्य–धर्मपाल-धर्मकीर्त्यादिभिः, द्विविधा हि यस्माद् रूपादीनां शक्तिः–सामान्या-एका, प्रतिनियता च-अपरा । '[४१]

( २ ) एतच्च यदाह न्यायवादी धर्मकीर्तिः–
" बीजादङ्कुरजन्माग्नेर्धूमात् सिद्धिरितीदृशी । बाह्यार्थाश्रयिणी याऽपि कारकज्ञापकस्थितिः ॥ १ ॥
साऽपि तद्रूपनिर्भासा तथा नियतसङ्गमाः । बुद्धीराश्रित्य कल्प्येत यदि किं वा विरुध्यते ॥२॥[४२]
इत्यादि । तदेतदम्यग्यतमपि दर्शितं भवति ।

( ३ ) ' ग्राह्यग्राहकभावलक्षण एव नयः प्रतिक्षिप्त इति चेत्, न अस्य धर्मकीर्तिना [ भवत्तार्किकचूडामणिना ] अनङ्गीकृतत्वात् । '[४३]

( ४ ) ' धर्मकीर्तिनाऽप्यभ्युपगतत्वात्, हेतुबिन्दौ " भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ न कारणभेदात् कार्यभेदः स्यात् । " इत्याशङ्क्य " न यथास्वं स्वभावभेदेन तादृशस्य परस्परोपकारिणस्तत्सामग्रीविशेषस्योत्पत्तिसङ्गतेः " इत्यादेः ] स्वयमेवाभिधानात्[४४]

अनयोर्गुरुशिष्ययोर्बौद्धतार्किकयोः सत्तासमयः महामहोपाध्यायसतीशचन्द्रविद्याभूषणेन क्रमशः खृष्टाब्दः ६००–६३५, ६३५–६५० पर्यन्तः निर्धारितः ।[४५] अध्यापककाशीनाथपाठकमहाशयलिखितपूर्वोक्तनिबन्धानुसारेण मीमांसाश्लोकवार्तिककर्त्रा कुमारिलेन ( तन्त्रवार्तिके भर्तृहरेरिव ) श्लोकवार्तिके धर्मकीर्तेर्विचाराणामपि प्रतिक्षेपः कृतः इति ज्ञायते । भर्तृहरेरिव धर्मकीर्तेरपि सत्तासमयत्वेन खृष्टीयसप्तमशताब्दीपूर्वार्द्धस्य निर्णीतत्वात्, तद्विचारप्रतिक्षेपकारी कुमारिलाचार्यो हि प्राक्प्रदर्शित-

---

४० शास्त्रवार्तासमुच्चय ( दे० ला० जैनपुस्तक० फ० ) पृ० ३५४
४१ अनेकान्तजयपताका ( अमदाबाद ) पृ० ५०
४२ " " " ५७
४३ " " " ६०
४४ " " " ६६
४५ हिस्टरी ऑफ दी मिडीवल स्कूल ऑफ इण्डियन लॉजिक पृ० १० –१०३ ।

निर्णयवत्, सप्तशततमे ( ७०० ) ख्रिष्टाब्द एव विद्यमानः सम्भाव्यते। हरिभद्रेण कुमारिलस्य नाम निर्दिष्टमिति तु प्रागेव प्रदर्शितम् । अतश्च, बौद्धतार्किकपुङ्गवधर्मकीर्त्याचार्यात्, तत्प्रतिक्षेपकात् महामीमांसककुमारिलाच्च, तदुभयसिद्धान्तालोचनाकारो हरिभद्रोऽर्वाचीन, इति सुनिश्चितम् ।

ख्रिष्टीयसप्तशततमाब्द ( ७०० ) वर्तिनं कुमारिलं हरिभद्रः स्मरति, हरिभद्रं पुनः—अष्टसप्तत्यधिकसप्तशततम ( ७७८ ) ख्रिष्टाब्दवर्ती कुवलयमालाकथाकारो दाक्षिण्यचिह्नसूरिः। अतो हेतोः, एतयोर्द्वयोरन्तराले काले— अर्थात् ख्रिष्टीयाष्टमशताब्दीमध्यभागे —हरिभद्रो विद्यमानो भवेत्, इति निःसन्देहमनुमीयते ।

(३) अन्यच्च—हरिभद्राचार्येण ' नन्दीसूत्र ' नामकजैनागमस्य संक्षिप्तं संस्कृतविवरणं लिखितमस्ति । अस्मिन् विवरणे बहुषु स्थलेषु ' जिनदासगणिमहत्तर ' विरचित ' चूर्णि ' नामकप्राकृतव्याख्यातोऽनेके प्राकृतपाठास्तदवस्था एव समुद्धृताः सन्ति[46] । इयं च चूर्णिः—

' शकराज्ञः (राज्यस्य) पञ्चसु वर्षशतेषु व्यतिक्रान्तेषु अष्टनवतिषु नन्द्यध्ययनचूर्णिः समाप्ता।' इत्यनेनैव तत्प्रान्तस्थित-पुष्पिकालेखेन, शकीयपञ्चशताष्टनवत्यामतिक्रान्तायां वर्षे —अर्थात् ६७६ ख्रिष्टाब्दे ७३३ विक्रमाब्दे वा, विरचिता, इति स्पष्टं ज्ञायते[47] । अतो हि चूर्णिरचनाकालात् प्राकृतगाथानिर्दिष्टहरिभद्रीयसूत्रवृत्तिस्तस्मात् प्रायः सार्धशतवर्षेणार्वाचीनः ।

अपि नाम चूर्णिरचनानन्तरं पञ्चविंशतिपञ्चाशद्वर्षेष्वतिक्रान्तेष्वेव हरिभद्रेण स्वीयं विवरणं विरचितं भवेत्। अतोऽनया गणनयाऽपि हरिभद्रस्य विद्यमानत्वं ख्रिष्टीयाष्टमशताब्द्यामेव सम्पद्यते

एतादृशानामनेकेषां सुनिश्चितबाधकप्रमाणानां सद्भावात् प्राकृतगाथानिर्देशानुसारेण हरिभद्रस्य षष्ठशताब्दीवर्तित्वं कथमपि साधयितुं न शक्यते । तथा कुवलयमालाकथायामप्यस्मिन्द-

46 नन्दीसूत्रीयस्थविरावल्याः ३७ तमगाथाया व्याख्या, हरिभद्रेणेत्थं कृताऽस्ति—

' जेसि इमो गाहा व्याख्या येषामनुयोग प्रचरति अद्यापि अर्धभरते वैताढ्यादारतः । बहुनगरेषु निर्गत प्रसृत प्रसिद्ध यशा यस्य ते बहुनगरनिर्गतयशसः । तान् वन्दे। सिंहवाचकशिष्यान् स्कन्दिलाचार्यान्। कह पुण तेसिं अणुओगो ? उच्यते बारससंवच्छरिए महंते दुब्भिक्खकाले भत्तट्ठा फिडियाण ( ? ) गहणगुणणाणुप्पेहाभावतो सुत्ते विप्पणट्ठे पुणो सुभिक्खे काले जाते महुराए महंते साधुसमुदए खदिलायरियप्पमुहसंघेण जो जं संभरइ। एवं संघडियं कालियसुयं। जम्हा एयं महुराए कयं तम्हा माहुरी वायणा भण्णइ। सा य खदिलायरियसम्मत त्ति काउं तस्संतिओ अणुओगो भण्णति। अण्णे भणंति जहा सुयं ण णट्ठं तम्मि दुब्भिक्खकाले जे अन्ने पहाणा अणुओगधरा ते विणट्ठा। एगे खंदिलायरिए संधरे। तेण महुराए पुणो अणुओगो पवत्तिओ त्ति महुरावायणा भण्णइ, तस्संतिओ अणुओगो भण्णइ इति गाथार्थः ।

एष सर्वोऽपि प्राकृतपाठो हरिभद्रसूरिणा नन्दीचूर्णितः समुद्धृतः । एवमन्यत्रापि अनेकेषु स्थलेषु द्रष्टुं शक्यते ।

47 बृहट्टिप्पनिकानामधेयायां प्राचीनायां जैनवाङ्मयसूच्यामपि एतद्रचनासमयः समुल्लिखितः । तथा— ' नन्दीसूत्र ७०० [ श्लोकप्रमाण ] चूर्णि ७३३ वर्षे कृता स्तम्भ० । स्तम्भतीर्थ । विना [ अन्यत्र ] नास्ति " । ( अस्मत्पार्श्वस्था प्राचीना हस्तलेखा । )

ग्यप्रमाणबलात् सिद्धर्षिसमसमयवर्तित्वमपि न सिद्ध्यति। इत्थं चास्मदुपज्ञं खृष्टीयाष्टमशताब्दीवर्तित्वमेव तस्य महामतेर्निष्प्रत्यूहं स्थिरीभवति।

न खल्वेवं केवलमनुमानसिद्ध कुमारिलसत्तासमय एवास्मत्कृतस्यास्य निर्णयस्य मूलाधारभूतं प्रमाणम्, किन्तु साक्षाद् हरिभद्रसूरेः सकाशात् संप्राप्तप्रमाण न्यायशास्त्रपाण्डित्यस्य तच्छिष्यीभूतस्यैकस्य विदुषस्तद्विषयक कथनमपि मुख्यमस्ति। ननु कोऽसौ विद्वान् ? किं पुनस्तत्कथनम् ? इति चेदुच्यते–स एव पूर्वनिर्दिष्टो दाक्षिण्यचिह्नापरनामा उद्द्योतनसूरिर्हरिभद्राल्लब्धन्यायविद्यो विद्वान्, कथनं पुनस्तस्या एव कुवलयमालाकथायाः प्रशस्तिग्रथितम्, इति। तत्कथाप्रशस्तौ कथाकारेण स्वपरिचायकमावश्यकं कियद् वर्णनं कृतमस्ति; तत्र हरिभद्रस्यापि निर्देशः सविशेषं दृष्टिगोचरतामुपयाति। किञ्चिद् विस्तृताऽपि सा प्रशस्तिरत्युपयोगित्वात्, अद्यावधि पुराविद्भिरदृष्टपूर्वत्वाच्चात्र तावत् समुद्ध्रियते—

१ अत्थि पयडा पुरीण पव्वइया नाम रयणसोहिल्ला।
तत्थ ट्ठिएण भुत्ता पुहई सिरितोरमाणेण ॥

२ तस्स गुरू हरिउत्तो आयरिओ आसि गुत्तवंसीओ।
तीए नयरीए दिन्नो जेण निवेसो तहिं काले ॥

३ [ तस्स ] बहुकलाकुसलो सिद्धन्तवियाणओ कई दक्खो।
आयरिय-देवगुत्तो अज्ज वि वित्थरए [से] कित्ती ॥

४ सिवचन्दगणी अह मयहरो त्ति सो एत्थ आगओ देसा।
सिरिभिल्लमालनयरम्मि संठिओ कप्परुक्खो व्व।

५ तस्स खमासमणगुणो नामेण जक्खदत्तगणिनामो।
सिस्सो महइमहप्पा आसि तिलोए वि पयडजसो ॥

६ तस्स य सीसा बहुया तव-वीरिय-लद्ध चरण-संपण्णा।
रम्मो गुज्जरदेसो जेहिं कओ देवहरएहिं ॥

७ आगासवप्पनयरे वडेसरो आसि जो खमासमणो।
तस्स मुहदंसणे च्चिय अवि पसमइ जो अहव्वो वि ॥

---

संस्कृतच्छाया—

१ अस्ति प्रकटा पुरीणां पर्वतिका नाम रत्नशोभावती। तत्र स्थितेन भुक्ता पृथ्वी श्रीतोरमाणेन ॥
२ तस्य गुरुर्हरिगुप्त आचार्य आसीद् गुप्तवंशीयः। तस्यां नगर्यां दत्तो जिननिवेशस्तस्मिन् काले ॥
३ तस्य बहुकलाकुशलः सिद्धान्तविज्ञायकः कविर्दक्षः। आचार्यदेवगुप्तोऽद्यापि विस्तरति यस्य कीर्तिः ॥
४ शिवचन्द्रगणी अथ महत्तर इति सोऽत्रागतो देशात्। श्रीभिल्लमालनगरे स स्थितः कल्पवृक्ष इव ॥
५ तस्य क्षमाश्रमणगुणो नाम्ना यक्षदत्तगणिनामा। शिष्यो महातिमहात्मा आसीत् त्रिलोकेऽपि प्रकटयशाः॥
६ तस्य च शिष्या बहुकास्तपोवीर्यलब्धचरणसम्पन्नाः। रम्यो गुर्जरदेशो यैः कृतो देवगृहकैः ॥
७ आकाशवप्रनगरे वटेश्वर आसीत् यः क्षमाश्रमणः। तस्य मुखदर्शनेनैवापि प्रशाम्यति योऽभव्योऽपि ॥

८ तस्स य आयारधरो तत्तायरिओ त्ति नामसारगुणो ।
आसि तवतेयनिज्जियपावतमोहो दिणयरो व्व ॥
९ जो दूसमसलिलपवाहवेगहीरन्तगुणसहस्साण ।
सीलङ्गविउलसालो लग्गणक्खंभो व्व निक्कंपो ॥
१० सीसेण तस्स एसा हिरिदेवीदिन्नदंसणमणेण ।
रइया कुवलयमाला विलासिरदक्खिण्णइन्धेण ॥
११ दिन्नजहिच्छियफलओ बहुकित्तीकुसुमरेहिराभोओ ।
आयरिय-वीरभद्दो अवा ( हा ) वरो कप्परुक्खो व्व ॥
१२ सो सिद्धंत [ म्मि ] गुरु ( रू ), पमाण-नाएण ( अ ) जस्स हरिभद्दो ।
बहुगन्थसत्थवित्थरपयड-[ समत्तसुअ ] सच्चत्थो ॥
१३ राया [ य ] खत्तियाणं वंसे जाओ वडेसरो नाम ।
तस्सुज्जोयणनामो तणओ अह विरइआ तेण ॥

अस्यां प्रशस्तौ प्रथमं दशभिर्गाथाभिर्दाक्षिण्यचिह्नेन स्वकीया मूल ( दीक्षा ) गुरुपरम्परा वर्णिता । तदनन्तरं च तिसृभिर्गाथाभिर्विशेषोपकारिणः पूज्यगुरवः प्रकीर्तिताः । तेषु गुरुषु—अन्यतमो हरिभद्रोऽपि । अस्य गाथाकुलकस्यैव स्फुटार्थः —यः- अपरः कल्पवृक्ष इव यथेप्सितफलप्रदो बहुकीर्तिकुसुमसमलङ्कृतश्च, स आचार्यवीरभद्रस्तु यस्य सिद्धान्ते—अर्थात् सिद्धान्ताध्यापको गुरुः, येन च बहून् ग्रन्थान् प्रणीय समस्तश्रुतस्य—निखिलजैनागमस्य सत्योऽर्थः प्रकटीकृतः स आचार्यहरिभद्रो यस्य प्रमाण-न्याये-अर्थात् प्रमाण-न्यायशास्त्राध्यापको गुरुः, क्षत्रियाणां वंशे समुत्पन्नो वटेश्वरो नाम राजा यस्य च पिता, तेन ' उद्द्योतन ' इति मूलनाम्ना एषा कथा गुम्फिता, इति ।

अनेनोल्लेखेन स्पष्टं ज्ञायते यत् — कथाकृता दाक्षिण्य चिह्नेन हरिभद्रसूरिसमीपे प्रमाण-न्यायशास्त्राणामध्ययनं कृतम् । अत्र पुनर्विदुषां पुरः एतन्निवेदनस्य न कापि आवश्यकता, यत्—अस्मिन्नवतरणे वर्णितोऽसौ हरिभद्रः, स एव प्रामाणिकग्रामणीः, यस्य सत्तासमय निर्णेतुमयं निबन्ध उपक्रान्तोऽस्माभि । यतः ' *बहुग्रन्थसार्थविस्तरप्रकटसमस्तश्रुतसत्यार्थ—* ' इति विशेषणविशिष्टः कश्चिदपरो हरिभद्रसूरिरद्यावधि जैनवाङ्मये न क्वापि दृष्टः, श्रुतो वा ।

तदेवम्- केवलविशुद्ध—प्रशमरसपरिपूर्ण—समरादित्यकथाकर्ता हरिभद्रसूरिः, शान्तरसाभिश्रि-

---

८ तस्य चाऽऽचारधरस्तत्त्वा(ता?)चार्य इति नामसारगुण । आसीत् तपस्तेजोनिर्जितपापतमोघो दिनकर इव॥

९ यो दुष्षमसलिलप्रवाहवेगह्रियमाणगुणसहस्राणाम । शीलाङ्गविपुलशालो लग्नस्तम्भ इव निष्कम्पः ॥

१० शिष्येण तस्यैषा ह्रीदेवीदत्तदर्शनमनसा । रचिता कुवलयमाला विलसद् दाक्षिण्यचिह्नेन ॥

११ दत्तयथेप्सितफलको बहुकीर्तिकुसुमराजमानाऽऽभोग. । आचार्य वीरभद्रोऽथापर. कल्पवृक्ष इव ॥

१२ स सिद्धान्ते गुरु , प्रमाण न्याये च यस्य हरिभद्र । बहुग्रन्थसार्थविस्तरप्रकटसमस्तश्रुतसत्यार्थ ॥

१३ राजा च क्षत्रियाणां वंशे जातो वटेश्वरो नाम । तस्योद्द्योतननामा तनयोऽथ विरचिता तेन ॥

तच्छृङ्गाररसपरिप्लुत–कुवलयमालाकथाकृद् दाक्षिण्यचिह्नसूरिश्च–एतौ द्वौ गुरु–शिष्यौ निस्सन्देहं समसमयवर्तिनावेव; इति निर्णय ।

तादृश ‘ बहुग्रन्थसार्थ ’ रचनाकारिणः, परोपकारचिकीर्षया सर्वत्राऽप्रतिबद्धविहारिणो विदुष आयुः-षष्टिः, सप्ततिर्वा वर्षाणि-अवश्यं भवेत्, इति सम्भावनया तस्य महापुरुषस्य जीवनकालं वयं सप्तशतीतमात् खृष्टाब्दादारभ्य सप्तत्यधिकसप्तशतीतम ( अङ्कतः ७००–७७० ) पर्यन्तम्, अथवा सप्तपञ्चाशदधिकसप्तशतीतमाद् विक्रमाब्दादारभ्य सप्तविंशत्यधिकाष्टशतीतम ( अङ्कतः ७५७–८२७ ) पर्यन्तम्, स्थिरीकुर्मः । इति शमस्तु श्रमणसङ्घाय ।

---

## परिशिष्टम् ।

—∗—

### १

### हरिभद्रः–शान्तरक्षितश्च ।

आचार्यहरिभद्रेण ‘ शास्त्रवार्तासमुच्चय ’ नामके ग्रन्थे क्षणिकवादविचारमीमांसायां पूर्वं न्यायवादिनो धर्मकीर्तेर्मतमालोच्य, तदनन्तरं निम्नलिखितेन श्लोकेन सूक्ष्मबुद्धेः शान्तरक्षितस्याऽपि मतस्यालोचना आरब्धा । यथा—

> एतेनैतत्प्रतिक्षिप्तं यदुक्तं सूक्ष्मबुद्धिना ।
> “ नाऽसतो भावकर्तृत्वं तदवस्थान्तरं न स ॥ ” [४८]

अस्य श्लोकस्य स्वोपज्ञव्याख्यायां ‘ सूक्ष्मबुद्धिना ’ इत्यस्य पदस्य ‘ कुशाग्रधिया–शान्तरक्षितेन ’ इत्येवंरूपा व्याख्या कृत्वा स्पष्टरूपेण शान्तरक्षितस्य साक्षान्निर्देशः कृत ।

अथाऽत्रायं प्रश्नः समुत्पद्यते–कोऽसौ शान्तरक्षित ? कदा च सञ्जात ? इति । एतत्प्रश्नपर्यालोचने कृते सति–इदं ज्ञायते—म० म० सतीशचन्द्रविद्याभूषणेन स्वीये ‘ मध्यकालीनभारतीयन्यायशास्त्रेतिहास ’ नामके पुस्तके [४९] यस्यैकस्य बौद्धनैयायिकस्य शान्तरक्षितस्य वर्णनं लिखितमस्ति, स एवायं हरिभद्रस्मृतः शान्तरक्षितः, इति सम्भाव्यते । तस्य शान्तरक्षितस्य सत्तासमयो विद्याभूषणमहाशयेन खृ० ७४९ निकटवर्ती स्थिरीकृत । तेन हि ‘ वादन्यायवृत्ति-विपञ्चितार्थ ’ इति, ‘ तत्त्वसङ्ग्रहकारिका ’ इति चैतन्नामानौ द्वौ ग्रन्थौ विरचितौ स्तः। तत्र, द्वितीयस्य ग्रन्थस्य तु

---

४८ शास्त्रवार्तासमुच्चय. ( दे० ला० जैनपु० फ० पृ० १४० )

४९ पृ० १२४

'पञ्जिका' नाम्नी एका टीकाऽपि तत्समकालसंजातेनैव नालन्दाविद्यापीठीयतन्त्रशास्त्राध्यापकेन आचार्यकमलशीलेन लिखिताऽस्ति। अस्य सटीकस्य ग्रन्थस्यैकः प्राचीनो हस्तलेखोऽस्माभिर्गुर्जरत्रापुरातनराजधान्यामणहिलपुरपट्टणनाम्न्यां प्रतिष्ठितजैनपुस्तकभाण्डागारे दृष्टचरः। [50] हरिभद्रसूरिविरचित 'शास्त्रवार्तासमुच्चय' ग्रन्थसदृश एव सर्वदर्शनालोचनात्मकः स ग्रन्थः। प्रस्तुतनिबन्धलेखनसमये तस्य ग्रन्थस्य पुरोवर्तित्वाभावाद् नैतद्वक्तुं शक्नुमो वयं यत्, हरिभद्रसूरिणा शान्तरक्षितकर्तृकमुपरि निर्दिष्टं यत् श्लोकार्द्धं समुद्धृतं तद् एतत्तत्त्वसङ्ग्रहान्तर्गतं किं वा अन्यग्रन्थान्तर्गतम्, इति। परन्तु, एतावाँस्तु दृढविश्वासोऽस्माकम्—उक्तश्लोकार्द्धम्, किं वा तदुक्तो विचारः प्रस्तुतस्यैव शान्तरक्षितस्य निर्मिते कस्मिन्नपि ग्रन्थे भवेदिति। तथा सति, यदि विद्याभूषणमहाशयेन लिखितः शान्तरक्षितसमयो वास्तवस्तदा हरिभद्रः, शान्तरक्षितश्च—एतौ द्वौ समसमयवर्तमानावेवास्ताम्।

इह खलु कश्चिद्विद्वानित्थमाशङ्केत—यदि हरिभद्र-शान्तरक्षितौ द्वौ समसमय एव वर्तमानावभूताम्, तर्हि हरिभद्रकृतः शान्तरक्षितविचारप्रतिक्षेपः कथं सङ्गतिमाप्नुयात्? यत—तस्मिन् पुरातने समये, इदानीमुपलभ्यमानानि मुद्रणयन्त्र-समाचारपत्र-धूमशकटादिसदृशानि साधनानि नासन्, यषां साहाय्यात् स्वल्पेनैव कालेन कश्चिद् विद्वान्, तदीयविचारान्वा सर्वत्र विश्रुतान् भवितुं शक्नुयात्, तथा, तस्य जीवितावस्थायामेव देशान्तरीयाः, सम्प्रदायान्तरीया वा विद्वांसो तत्सम्मतम्, विचारालोचनं वा कर्तुं पारयेयुः।

अत्रास्माकमिदं मतम्—इदं किल सत्यम्, उक्तसाधनविरहिते तादृशे पुरातने समये साधारणपण्डितस्याऽऽधुनिकसमयवत् स्वल्पेनैव कालेन सर्वत्र प्रसिद्धिभवनं न सुलभम्; तथापि, असाधारणप्रज्ञाशालिनो विदुषो विख्यातिर्दशभिर्विंशत्या वा वर्षैः देशदेशान्तरेषु प्रप्रसरणं नाऽशक्यम्। यतः पुरा काले भारतवर्षे एतादृशी पद्धतिरासीत् यदा कदा यः कोऽप्यसाधारणो विद्वान् प्रादुर्भवति, तदा स स्वकीयं वैदुष्यं प्रख्यापयितुम्, दिग्विजयं च कर्तुं देशदेशान्तरेषु परिभ्रमणार्थं निर्गच्छति स्म। अनेकासु विद्वत्सभासु, राजसभासु च समुपस्थायाऽपरापरैः प्रसिद्धविद्वद्भिः सह वादविवादं करोति स्म। स्थले स्थले स्वविचारानुयायिनः शिष्यान् स्थापयति। तथैव यदा यदा यः कश्चिद् विद्वान् नवीनमपूर्वं ग्रन्थं लिखति, तदा तं ग्रन्थमनेकेषु आदर्शेषु अवतार्य प्रसिद्धप्रसिद्धतरपुस्तकागार—राजमन्दिर-देवालयादिषु स्थानेषु उपहाररूपेण, प्रत्या तत्पठनार्थं सर्वेषु विद्वत्सु च प्रेषयति। इति हेतोस्तादृशविदुषः स्वजीवितावस्थायामेव यद्बहुप्रसिद्धिः प्राप्तव्यासीत्, अन्यान्यविद्वद्भिश्च तदीयग्रन्थानां आलोचना-प्रत्यालोचनादिः कर्तव्याऽपि न च काचिदसम्भवनीयता।

---

[50] अधुना बटपद्रीय (बडोदरा) राज्यद्वाराप्रकाशित 'गायकवाड्स् ओरिएन्टल सीरीझ' नाम्न्यां ग्रन्थमालायां मुद्र्यते एष ग्रन्थः।

[51] 'डेक्कनकालेज' संस्थितराजकीयग्रन्थसङ्ग्रहस्य पुस्तकम्, पृ० २१

२

हरिभद्रः—धर्मोत्तरश्च ।

हरिभद्राचार्येण बौद्धन्यायशास्त्रसूत्रणासूत्रधाराचार्यदिग्नागविरचितस्य 'न्यायप्रवेशप्रकरण' नामकप्रमाणग्रन्थस्यैका 'शिष्यहिता' नाम्नी संक्षिप्ता व्याख्या लिखिताऽस्ति । एतस्या व्याख्याया आदावेव 'अनुमान' शब्दस्य व्याख्यां कुर्वता तेन सूरिणा (न जाने केन कारणेन—कदाचित्स्मृतिभ्रंशेन) एकस्मिन्स्थ उल्लेखः कृतः । सा व्याख्या इत्थमस्ति—

"मीयतेऽनेनेति मानम्—परिच्छिद्यत इत्यर्थः । 'अनु' शब्दः पश्चादर्थे—पश्चान्मानमनुमानम्—पक्षधर्मग्रहण-सम्बन्धस्मरणपूर्वकमित्यर्थः । वक्ष्यति च "त्रिरूपाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानमिति"।

एतदवतरणमान्ते 'वक्ष्यति' इति क्रियापदमुल्लिख्याग्रे "त्रिरूपाल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानम्" इति, यत् सूत्रं निर्दिष्टं तदुपरि केनचित् प्राचीनेन पण्डितेन निम्नलिखिता टिप्पणी कृताऽस्ति । यथा —

"नन्वेतत्सूत्रं धर्मोत्तरीयम्, न तु प्रकृतशास्त्रसत्कम् । एतत्शास्त्रसत्कमेतत् सूत्रम्—'लिङ्गं पुनरित्यादि' । तत् कथं 'वक्ष्यति चेति' प्रोच्यते? । सत्यमेतत्—यद्यप्यत्रैवंविधं सूत्रं नास्ति तथाऽपि धर्मोत्तरीयसूत्रमत्र सूत्रोक्तानुमानलक्षणाभिधायकमेव, इत्यर्थतोऽवत्य-धर्मोत्तरीयसूत्रयोः साम्यमेव, इत्यर्थापेक्षया वक्ष्यतीति व्याख्येयमिति न विरोधः ।"

टिप्पणीकारस्यानेनोल्लेखेन स्पष्टं ज्ञायते यत्, 'वक्ष्यति' इति कृत्वा हरिभद्रेण यत् सूत्रं समुद्दिष्टं तन्न दिग्नागाचार्यरचितम्, किन्तु धर्मोत्तरविरचितम् । 'दिग्नागीयसूत्रं विहाय धर्मोत्तरीयं सूत्रं कथमुल्लिखितमाचार्येण?' इत्यस्य प्रश्नस्य विचारणया नास्त्यत्र किमपि प्रयोजनमस्माकम् । अस्माकं त्वेतदेव विचारणीयम्—यदि हरिभद्रसमुद्धृतस्य तस्य सूत्रस्य कर्ता, टिप्पणीकारोल्लेखानुसारेण धर्मोत्तराचार्य एव, (टिप्पणीकारकथने न कस्या अपि शङ्काया अवकाशः, कारणाभावात्) तर्हि कोऽसौ धर्मोत्तरः? कश्च तत्कालः? इति ।

अत्रावधेयं तावत् पुराविदेषु धर्मकीर्त्याचार्यविरचित 'न्यायबिन्दु' टीकाकर्तृत्वेनैक एव धर्मोत्तरः सुप्रसिद्धोऽस्ति । परन्तु, स हरिभद्रनिर्दिष्टसूत्रकर्ता सिद्धो भवितुं नार्हति । यतस्तस्य सत्तासमयो विद्वद्भिः सप्तचत्वारिंशदधिकाष्टशततम (८४७) ख्रिष्टाब्दनिकटवर्ती निर्णीतः । [५१] यदि चायं समयो वास्तविकस्तर्हि स धर्मोत्तरो हरिभद्रात् प्रायः शताब्दीप्रमितसमयपश्चाद्वर्ती सिद्ध्यति । ततश्च तत्कृतं सूत्रं हरिभद्रेण निर्देष्टुं न शक्यते । यदि पुनरन्यान्यैः प्रमाणैस्तत्सूत्रमस्यैव धर्मोत्तरस्य कृतित्वेन संसिद्ध्येत्, तर्हि तस्य समयोऽपि हरिभद्रसमयात् पूर्ववर्ती, तत्समो वा स्वीकर्तव्यो भवेत् ।

---

५१ महामहोपाध्यायसतीशचन्द्रविद्याभूषणविरचित 'हिस्टरी आव दि मीडीवल स्कूल आव इन्डियन-लॉजिक' नामकं पुस्तकं (पृ० १३१) द्रष्टव्यम् ।

अस्मन्मतेन तु हरिभद्रनिर्देशसूचितो धर्मोत्तरः प्रसिद्धधर्मोत्तरात्कश्चिदपरः पुरातनो धर्मोत्तरः सम्भाव्यते। एतत्सम्भावनापरिपोषकं पुनर्धर्मोत्तरनामकव्यक्तिद्वयसूचनपरमेकं स्पष्टं प्रमाणमपि प्राप्तमस्माभिः। तथा हि—

सुप्रसिद्धजैनतार्किकवादिदेवसूरिनाम्ना आचार्येण स्वरचित 'स्याद्वादरत्नाकर' नामके प्रतिष्ठिते तर्कग्रन्थे प्रथमे परिच्छेदे "स्वपरव्यवसायि ज्ञानं प्रमाणम्" इत्यस्य द्वितीयसूत्रस्य व्याख्यायां लक्ष्य-लक्षणवाचकशब्दयोर्विधेया-ऽविधेयतामीमांसावसरे प्रसिद्धधर्मोत्तरस्य तद्विषयका विचारा सविस्तरं प्रत्यालोचिता। तत्र चायं धर्मोत्तरो धर्मकीर्तिकृत 'न्यायविनिश्चय'–'न्यायबिन्दु' प्रकरणयोर्व्याख्याकारत्वेनोपवर्णितः, उद्धृतानि च तत्तत्व्याख्यामध्यतः कानिचिद् अवतरणवचांस्यपि। तत्रैव पुनरेतस्य धर्मोत्तरस्य 'वृद्धधर्मोत्तरानुसारी' इति, 'वृद्धसेवाप्रसिद्धः' इति च विशेषणे अपि दत्ते दृश्यते। प्रान्ते च एष वृद्धधर्मोत्तरविचाराप्ररीकारकत्वेन उपालभ्यताऽपि।[५३]

---

५३ एतदर्थसूचका वादिदेवसूरिकृता उल्लेखास्त्वेताद्दशाः—

(१) 'अत्राह धर्मोत्तर —लक्ष्यलक्षणभावविधानवाक्ये लक्ष्यमनूद्य लक्षणमेव विधीयते। लक्ष्यं हि प्रसिद्धं भवति ततस्तदनवाद्यम्, लक्षणं पुनरप्रसिद्धमिति तद्विधेयम्। अज्ञातज्ञापनं विधिरित्यभिधानात्। सिद्धे तु लक्ष्यलक्षणभावे लक्षणमनूद्य लक्ष्यमेव विधीयत इति।' (स्याद्वादरत्नाकर, पृ० २०)

(२) 'साधो! सौगत! कुमर्तुर्धर्मकीर्तिनिकेतने। व्यवस्था कुरुष नूतनस्थापितमहत्तम ॥

स हि महात्मा (धर्मकीर्तिः) विनिश्चये (न्यायविनिश्चये) प्रत्यक्षमक्रम, न्यायबिन्दौ तु प्रत्यक्षानुमाने द्वे अप्यप्रसाध्यैव तल्लक्षणानि प्रणयति स्म। किञ्च, शब्दानित्यत्वासिद्धय कृतकत्वमसिद्धमपि सर्व सुदन्यस्य पश्चात् तत्सिद्धिमभिदधानोऽपि न लक्षणस्य तामनन्यसे इति स्वाभिमानमात्रम्। अपि च, प्रत्यक्षलक्षणव्याख्यालक्षणे लक्ष्यलक्षणभावविधानवाक्ये इत्यादिना लक्षणस्यैव विधिमभिधित्से विधरवाप्राधान बुद्धे, यतः न्यायविनिश्चयटीकायां स्वार्थानमानस्य लक्षणं तत्कथं त्रिरूप लिङ्गग्राहिण एव दर्शनस्य नानमानत्वप्रसक्तं इति पर्यनुयुञ्जानः एतदेव सामर्थ्यप्राप्तं दर्शयति यत् कृतेऽर्थे ज्ञानं तत्स्वार्थामिति। इत्यनमन्यमानस्यानमापयासि स्वयमेव लक्ष्यस्यापि विधिम। स्वयमेवाभिदधासि च न्यायबिन्दुवृत्तौ एतस्यैव लक्षणं त्रिरूपाच्च लिङ्गाद्यदनुमेयालम्बनं ज्ञानं तत्स्वार्थमनुमानमिति" (न्यायबिन्दुटीका पिटर्सनसंपादिता, पृ० ०१) विनिश्चयटीकायामपि च परार्थानुमानलक्षणं त्रिरूपस्य लिङ्गस्य यदाख्यानं तत्परार्थमनुमानमिति।' च व्याचक्षाण इत्यक्षुण्णं ते वैचक्षण्य मिति।' (स्याद्वादरत्नाकर, पृ० २०)

(३) 'अपि च भवद्भवनसूत्रणासूत्रधारो धर्मकीर्तिरपि न्यायविनिश्चयस्याद्य द्वितीय तृतीय - परिच्छेदेषु 'प्रत्यक्षं कल्पनापोढमभ्रान्तमिति।१। तत्र स्वार्थं त्रिरूपाल्लिङ्गतोऽर्थदृगिति। ।' 'परार्थमनुमानं तु स्वदृष्टार्थप्रकाशनमिति।३। त्रीणि लक्षणानि, 'तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रममविकल्पकं ज्ञानं प्रत्यक्षमिति।१।' त्रिलक्षणाल्लिङ्गाद्यदनुमेयेऽर्थे ज्ञानं तत्स्वार्थमनुमानमिति।२। "यथैव हि स्वयं त्रिरूपाल्लिङ्गात् लिङ्गिनि ज्ञानमुत्पन्नं तथैव परत्र लिङ्गिज्ञानोत्पिपादयिषया त्रिरूपलिङ्गाख्यानं परार्थमनुमानमिति।३।' च व्याचक्षाणो लक्षणस्यैव विधिमन्वकीर्तयत्। तथा लक्ष्यलक्षणभावविधानवाक्ये' इत्युपक्रम्य लक्षणमेव विधीयत इत्यभिदधानः कथं न स्ववचनविरोधमवबुध्यसे।' (स्याद्वादरत्नाकर पृ० २१)

(४) वकदेवबल स्वीय दर्शयन्निदर्शनम्। वृद्धधर्मोत्तरस्येव भावमत्र न्यरूपयत्॥ (स्याद्वादरत्नाकरः, पृ० २१)

अनेन प्रमाणेन स्पष्टीभवति, यत्—बौद्धतार्किकेषु धर्मोत्तरनामानौ द्वौ विद्वांसावभूताम्। तत्र च न्यायबिन्दुटीकाकारोऽर्वाचीनः, अपर प्राचीनः। सोऽपरः पुनर्विद्वत्सु 'वृद्धधर्मोत्तर' नाम्ना प्रसिद्धोऽभूत्। अर्वाचीनो धर्मोत्तरोऽपि तस्यैवानुयायी आसीत्—इति।

एवं सति, यदि तमेव वृद्धधर्मोत्तरं हरिभद्रनिर्दिष्टसूत्रकर्तृत्वेन सम्भावयामस्तर्हि नात्र काञ्चिद्-सङ्गतिमुत्पश्यामो वयम्।

अपि च न्यायबिन्दुटीकाकारधर्मोत्तरस्य हरिभद्रात् पूर्ववर्तित्वाभावेऽन्यत् प्रमाणमपि दृश्यते। यथा—धर्मोत्तरीयाया न्यायबिन्दुटीकाया उपरि 'मल्लवादी' नाम्नैकेन जैनाचार्येण टिप्पणी लिखिता वर्तते[54]। तस्याष्टिप्पण्या विलोकनेन ज्ञायते यत्—धर्मोत्तरेण स्वटीकायामनेकेषु स्थलेषु पूर्वटीकाकर्तुर्विनीतदेवस्य टीका दूषिता, खण्डिता च[55]। विनीतदेवस्य सत्तासमयः सन्नतस्त्वेन ६५०-७०० निकटवर्ती संस्थाप्यते।[56] अतस्तत्कृतटीकाया दूषको धर्मोत्तरस्तस्मात् समयात् तु परवर्त्येव इत्यत्र तु न कोऽपि विवदेत। एतादृश्यां स्थितौ, कदाचित् स हरिभद्रसमसमयवर्ती मन्तुं शक्येत परन्तु, तिब्बतीयेतिहासलेखकस्य तारानाथस्य यदिदं कथनम्—'आचार्यधर्मोत्तर' ८४७ खृष्टाब्द

---

५३ 'बहुमवाप्रसिद्धोऽपि प्रबलव विशङ्कितैः। बालवत्सादुपालभ्यस्त्वैविधविदूषामयम्॥
तथा हि सोऽयं वृद्धधर्मोत्तरानुसार्यलीकवाचालतया तुल्यस्वरूपयोरपि व्युत्पत्ति व्यवहारकालयो-रनुपपत्तिमुपकल्पयन् बाल इवैकामन्यदङ्गुलिं वेगवत्तया चलयन् दूरीकृत्य दर्शयतीत्यवमुपालभ्यते-त्रैविद्यकाविदैः। (स्याद्वादरत्नाकर पृ० १२)
(६) यथा वाचि 'अत एवेत्यादि तत्रायमाशय लक्ष्य हि प्रसिद्धमनूद्य भवतीत्यस्मात् सप्तविभक्त्या द्वितीयाद्या समुपादीयन्त 'लक्षणं पुनरप्रसिद्धं विधेयमित्यतः प्रथमविभक्तिः प्रथमैव प्रयुज्यत इति। सोऽयं साहित्यज्ञताभिमानात् तत्र वृद्धधर्मोत्तरमधरयति स्वयं त्वेव व्याचष्ट इति किमन्यदस्य देवानां-प्रियस्य श्लाघनीयता प्रज्ञायाः। (स्याद्वादरत्नाकर, पृ० १३

मार्गान्तरपातनाबलात् ''पि समाप्त]

५४ इयं टिप्पणी सम्प्रति 'बिब्लिओथिका बुद्धिका' नाम्न्या ग्रन्थमालायां (रसियादेशे) मुद्रयत

५५ टिप्पणीकारस्यैतदर्थसूचकानि कानिचिद्वाक्यानीमानि—
(१) सम्यग्ज्ञानेत्यादिना विनीतदेवव्याख्या दूषयति। (पृ० ३)
(२) 'ह्येयोऽर्थ इत्यादिना विनीतदेवस्य व्याख्या दूषिता। (पृ० १३)
(३) उत्तरेण ग्रन्थेन सर्वशब्द इत्यादिना टीकाकृता व्याख्या दूषयति। विनीतस्त्व ज्ञानशब्दात्याय-वमाशङ्क्य व्याख्यानम्। (पृ० २३)
(४) अनेन लक्ष्यलक्षणभाव दर्शयता विनीतदेवव्याख्यानं सन्नाभाक्तिमस्यायस्य प्रादुष्कृतम्। (पृ० ...)
(५) तत यद्विनीतदेवेन सामान्यवाच्यवाचकभावमङ्गीकृत्य निर्विकल्पकत्वमिन्द्रियविज्ञानस्य प्रतिपादितं तद् दूषितं भङ्ग्या। (पृ० २३ ४)

५६ म० म० सतीशचन्द्रविद्याभूषणलिखित 'हिस्टारी आफ दि मिडिवल स्कूल आफ इण्डियन लाजिक' नामकं पुस्तकं द्रष्टव्यम्। (पृ० ११९)

विद्यमानस्य बङ्गदेशशासकनृपतिवनपालस्य समवर्ती आसीत् '— [५७] इति । तस्य किमपि बाधकं प्रमाणमद्यावधि न प्रसिद्धिमायातम्, अतोऽस्य धर्मोत्तरस्य हरिभद्रादर्वाक्कालवर्तित्वस्वीकारे न किञ्चिदसामञ्जस्यम् ।

३

हरिभद्रः- मल्लवादी च ।

हरिभद्र-धर्मोत्तरयोरिव हरिभद्र मल्लवादिनोरपि पौर्वापर्ये एका जटिला समस्या समुपतिष्ठते । जैनतत्त्वज्ञानमूलाधारभूत-नयवादसिद्धान्तप्रतिपादकस्य ' द्वादशारनयचक्र ' नामकमहाग्रन्थस्य प्रणेता ' मल्लवादी 'नामाचार्यो जैनीये इतिहासे सुप्रसिद्धः । एनमेव तार्किकशिरोमणिं हरिभद्रसूरिरनेकान्तजयपताकायां द्वित्रेषु स्थलेषु [५८] ' आह च वादिमुख्यो मल्लवादी सम्मतिटीकायाम् ' इत्येतादृशेनोल्लेखेन जैनसाहित्यशेखरायमाण-' सम्मतिप्रकरण ' नामकमहातर्कग्रन्थस्याऽपि टीकाकारत्वेन ज्ञापितवान् । अयं चाचार्योऽद्यावधि जैनपरंपरायां साधारणतः ख्रिष्टीयचतुर्थशताब्दीवर्ती मन्यते ।

इतश्च, उपरितनपरिशिष्टसूचनानुसारेण धर्मोत्तरकृतन्यायबिन्दुटीकायाष्टिप्पणीकारत्वेनापि मल्लवादिन एव नाम अवाप्यते । सामान्यतो जैनवाङ्मयेऽत्रापि मल्लवादिनाम्ना एकस्यैवाचार्यस्य विश्रुतत्वात्, उक्तप्रसिद्धतार्किकमल्लवादि-न्यायबिन्दुटीकाटिप्पणकारमल्लवादिनोरैक्यस्वीकारे विदुषां भ्रान्तिः साहजिकी । अनयैव भ्रान्त्या विद्याभूषणमहाशयेन प्रसिद्धतार्किकमल्लवादिनः ख्रिष्टीयनवमशताब्दीवर्तित्वं स्थापयितुं प्रयासः कृतः । [५९]

परन्तु, असौ प्रसिद्धतार्किकस्तु हरिभद्रेण स्वयं स्पष्टं स्मृतत्वात्, तस्मात् प्राचीन एव, इत्यत्राधुना न स्वल्पोऽपि कस्याश्चित् शङ्काया अवकाशः । तथैव, उपरितने परिशिष्टे च धर्मोत्तरस्य हरिभद्रात् पश्चाद्वर्तित्वेन प्रदर्शितत्वात् टिप्पणीकारो मल्लवादी हि हरिभद्रादर्वाचीनः, इत्यपि स्फुटमेव । ततश्च-धर्मोत्तरनामानौ द्वौ बौद्धाचार्याविव मल्लवादिनामानौ जैनाचार्यावपि द्वावेव स्वीकर्णीयौ इत्यस्माकमत्र निर्णयः ।

४

हरिभद्रः — शङ्कराचार्यश्च ।

हरिभद्रसूरेः समयनिर्णयेन, तत्साहित्यावलोकनेन च मायावादप्रतिष्ठापकस्याऽऽदिमशङ्कराचार्यस्य सत्तासमयविषयेऽपि कियान् निर्णयः कर्तुं शक्यते ।

तत्र तावत् पुराविदां विदुषामस्मिन् विषयेऽनेकानि मतानि विलोक्यन्ते । कस्यचिन्मतेन शङ्कु

---

५७ तदेव पुस्तकम् ( पृ० १३१ )

५८ अनेकान्तजयपताका [ यशोविजयग्रन्थमालायां मुद्रिता ] पृ० ४७ ४८, ९९

५९ ' हिस्टरी आव दि मिडिवलस्कूल आव इन्डियन लॉजिक पृ० ३४

राचार्यः खलु खृष्टाब्दात् शतशो वर्षाणि पूर्ववर्ती, कस्यचिन्मतेन खृष्टीयपञ्चमशताब्दीवर्ती, केषांचिन्मतेन च षष्ठ-सप्तमा-ऽष्टमादिशताब्दीवर्ती वा; इति । अस्मन्मतेन पुन स हि-अद्वितीयोऽद्वैतवादी महात्मा हरिभद्रात्त्ववीचीन एव, न प्राचीनः; हरिभद्रेण स्वग्रन्थे क्वापि तत्सूचनस्याकृतत्वात् । हरिभद्रीयग्रन्थानां विलोकने स्पष्टमेव ज्ञायते, यत्—तेन सूरिणा स्वपूर्ववर्तिनां प्रायेण सर्वेषां प्रसिद्धतरतत्त्वज्ञानां मतानि मीमांसितानि, नामस्मरणानि च कृतानि । यदि शङ्कराचार्यसदृशो हि महान् तत्त्वज्ञ स्वस्मात् पूर्ववर्ती, जातो भवेत्, तर्हि तस्यापि नामस्मरणम्, मतमीमांसनं वा हरिभद्रेणावश्यं कृतं भवेत् । शङ्कराचार्यस्य मतमीमांसने तु हरिभद्रस्य विशिष्टः प्रसङ्गोऽपि प्राप्त आसीत् । यत—शङ्कराचार्येण हि स्वकीयशारीरिकभाष्ये द्वितीयाध्यायगतद्वितीयपादीय-‘ नैकस्मिन्नसम्भवात् ’ इत्यादि ( २, २, ३३–३६ ) सूत्रव्याख्यावसरे जैनदर्शनमूलभूत-‘ अनेकान्तवाद ’ ( स्याद्वाद ) सिद्धान्तस्य उपरि नैकेऽसदाक्षेपाः कृताः सन्ति । हरिभद्रेण पुन —‘ अनेकान्तजयपताका ’ ग्रन्थः समग्रप्रतिपक्षिदार्शनिककृतानेकान्तवादविषयकदोषारोपणदूरीकरणाय, स्वसिद्धान्तस्थापनायैव च विरचितोऽस्ति । तथा सति, यदि शङ्कराचार्यो हरिभद्रात् पूर्ववर्ती तदा कथं न शङ्करकृतानेकान्तवाद-विडम्बनं हरिभद्रेण प्रतिविडम्बितं दृश्येत ? इति । तथैव, हरिभद्रेण स्वीयेषु ग्रन्थेषु नैकेषु स्थलेषु समुचितरूपेण ब्रह्माद्वैतमताश्रित्य यथाभिमतं मीमांसा कृता वरीवृत्यते, तत्रापि न कुत्रचित् शङ्कराचार्य-विचाराणामनुसरणम्, आलोचनम्, विवेचनं वा कृतमुपलभ्यते । अतो ज्ञायते हरिभद्रादर्वाचीन एव शङ्कराचार्य । एवं च सति, प्रसिद्धदेशभक्तलोकमान्येन सुगृहीतनामधेयेन तिलकोपनाम्ना बाळगङ्गाधरेण स्वकृत ‘ कर्मयोगशास्त्रापरनाम ’ ‘ गीतारहस्य ’ ग्रन्थे शङ्कराचार्यस्य विद्यमानत्वं ६८८–७२० खृष्टाब्दे यदनुमितं तन्न सम्यगवभासते, किन्तु, अध्यापककाशिनाथपाठकमहाशयेन खृष्टाब्द ७८८–८२० यावद् यः समयः स्थिरीकृतः[६०] स एव अस्माकं सयुक्तिकः, सुनिश्चितः प्रतिभाति । इत्यलं प्रसङ्गेन ।

---

६० ‘ जर्नल बॉ० ब्रॅ० रॉ० ए० सो० पुस्तक १८ पृ० ८८–९६ इत्यादि ।

प्रकाशक—

शाह अंबालाल चतुरभाई बी ए

व्यवस्थापक

जैन साहित्य संशोधक समाज

फर्ग्युसन कालेज रोड, पूना

---

मुद्रक—सिताराम गणेश गोडबोले,

महाराष्ट्र प्रिंटिंग प्रेस, शुक्रवार

घर नं. ८८०, पुणें